# भूमिका

अभिनवकथानिकुञ्जोऽयं पाठकधुरीणानां करकमलेषूपहारीक्रियते। संस्कृतभाषायां पञ्चतन्त्रहितोपदेशादिलघुकथापुस्तकानां प्राचीनकाल एव प्रणयनं जातम्। विश्वस्मिन् तेषां विद्यते भूयान् समादरः। ततोऽपि प्राक् वेदेषु ब्राह्मणेषु पुराणेषु कथातत्त्वस्य भूयान् विकास आसीदिति न न जानन्ति इतिहासरसिकाः। कथाया यद्रूपमद्यत्वे 'उपन्यास' शब्देनोपन्यस्यते, पुरातनैः संस्कृतसाहित्यसमालोचकैः तत् 'कथा' शब्देन व्यवह्रियते स्म, तेनैव कादम्बरी, वासवदत्ता, तिलकमञ्जरी, इत्यादि रचनासु 'कथा' इति विशेषणं प्रयुज्यते। रामायणमहाभारतभागवतपुराणादि धार्मिकप्रवचनेषु बाहुल्येन व्यवह्रियतेऽद्यापि 'कथा' शब्दः। न्यायनयेऽपि प्रमाणतोऽर्थपरीक्षायां तत्त्वाऽवगमाय पूर्वपक्षोत्तरपक्षरूपेण येयं मनोहारिणी चेतश्चमत्कारकारिणी कापि शैली समालम्ब्यते सापि तत्र 'कथा' शब्देनाभिलप्यते।

अधुना तु संग्रहरूपपुस्तकेऽस्मिन् आंग्लभाषायां 'Story' शब्देन हिन्दीभाषायां च 'कहानी' शब्देन यदुच्यते तद्गृहीतमिति न तिरोहितं विदुषाम्। अत्रापि 'कथा' शब्दस्य निर्बाधं प्रवृत्तिर्मुख्यरूपेण दृष्टैव।

वर्तमानकाले जीवनस्य विभिन्नेषु क्षेत्रेषु यथा परिवर्तनं विलोक्यते तथैव रचनाक्षेत्रमपि परिवर्तनेनास्पृष्टं नावातिष्ठत। प्रत्युत साहित्ये युगानुरूपं परिवर्तनं किञ्चिदाधिक्येनैव दृष्टिगोचरं भवति। इयमपि कथाशैली साहित्यस्य नवीनमिव किमपि रूपम्। पूर्वमांग्लादि वैदेशिकीषु भाषासु लघुकथानां साफल्येन रचना सञ्जाताः। क्रमशः भारतेऽपि हिन्दीभाषायाम्, प्रादेशिकीष्वपि च भाषासु लघुकथालेखनस्य प्रवाहः प्रावर्तत। अस्मदाराध्या संस्कृतभाषापि शैलीमिमां साफल्येन समासादितवती। मुद्रणयन्त्रप्रचारानन्तरं सामयिकपत्रिकाणां प्रचारेण कथाशैलीयं प्रवृत्ता विकासं प्राप्ता च। संस्कृतभाषायामपि यदा प्रभृति मासिकीनां पत्रिकाणां प्रकाशनमारब्धं तदाप्रभृत्येव कथानामपि प्रणयनं प्रकाशनं च समारब्धम्। अद्यत्वे तु संस्कृतभाषायामपि कथानां संख्या सहस्रेष्वेव गणनीयतामर्हतीत्यस्माकं विश्वासः। परमितरभाषासु विभिन्नलेखकलिखितानां विभिन्नानां कथासन्दर्भाणां शतशः सङ्कलनानि

यथा प्रकाशितानि लभ्यन्ते न तथा संस्कृतभाषायां किमपि तादृशं सकलनमस्मद् दृष्टौ समायातम्। ईदृशाः कथासमूहास्तु द्वित्राः समुपलभ्यन्ते यत्र एकेनैव लेखकेन स्वीयानामेवानेकानां कथानां सकलनङ्कृतम्। सुप्रसिद्धाया लेखिकाया स्वर्गीयायाः क्षमारावमहोदयायाः संस्कृतकथानामेकः संग्रहः प्रकाशितः पाठ्यपुस्तकरूपेणापि निर्धारित इति जनामि। परं विभिन्नैर्लेखकैर्लिखितानां विभिन्नानां कथानां संग्रहः कोऽपि न प्राप्यते। तदर्थमेवायमस्मिन्विषये प्रथमः प्रयास इत्यौत्सुक्येनापि मदीयात्र सञ्जाता प्रवृत्तिः।

प्रायो वर्षद्वयं यावन्मया कथानां संग्रहकर्मणि लेखकानां स्वीकृतिग्रहणाय च प्रयतितम्, सकलनप्रवृत्तेन मया प्रायः कथानां शतद्वयी संगृहीता। तत्संग्रहमध्ये कासामपि लेखकाः स्वः प्रयाताः, तेषां सुपुत्रेभ्यो मया प्रकाशनस्वीकृतिरासादनीयाऽभवत्, तेषामप्यन्वेषणे कश्चन समयो व्यतीतः, बहूनां तु विदुषां बह्व्य एव कथा मुद्रिता मया संगृहीताः। कविशिरोमणिस्वर्गीयभट्टमथुरानाथशास्त्रिणामेव अष्टाविंशतिकथाः मया सम्प्राप्ताः। तासां सकलनप्रकाशनायापि मया तेषां सुयोग्याः पुत्राः मदीयमित्रवर्याः प्राच्यापाश्चात्योभयविचारसरणिदीक्षिताः श्रीकलानाथशर्माणः प्रबोधिताः कृतसङ्कल्पाः सन्ति ते तत्प्रकाशनायेति हर्षविषयोऽस्माकम्।

मदीयस्वर्गीयपितृचरणैर्युगमहर्षिभिः संस्कृतरत्नाकरपत्रस्य प्रथमसंपादकसंचालकैः अखिलभारतीयसंस्कृतसाहित्यसम्मेलनमद्दर्शानां महीनां सुमहतीनां संस्थानां प्रतिष्ठापकैः प्रातःस्मरणीयैः महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदैरेव मच्चेतसि एतादृशप्रयत्नकरणाय बीजं निक्षिप्तम्, सर्वदा च मार्गप्रदर्शनेन मदीयमुत्साहबीजमालवालायितम्, तेषामेव गीताव्याख्यानमालापुराणपारिजात-प्रमेय-पारिजात-चतुर्वेदिसंस्कृतरचनावलीपुराणपरिशीलन-साहित्यिकनिबन्ध-दर्शनअनुचिन्तनप्रभृति ग्रन्थतल्लजानां सम्पादनकर्मणि व्यापृतेन मया तेषां जीवितवेलायां कथासमूहस्यास्य सम्पादनमुद्रणार्थं समयो नासादितः। इदानीं कार्यमिदं पूर्णतां स्पृशतीति प्रमोदस्य विषयो नूनम्।

येषां विदुषां कथास्तावदत्र संगृहीताः तेषु म० म० श्रीगिरिधरशर्माणश्चतुर्वेदा अस्मत्पितृचरणाः, म० म० श्रीनारायणशास्त्रिखिस्तेमहोदयाः, कविशिरोमणिभट्टश्रीमथुरानाथशास्त्रिणः, श्रीसूर्यनारायणाचार्याः, श्रीवृद्धिचन्द्रशास्त्रिणश्च स्वर्गीयाः संजाताः। तत्कथाप्रकाशनस्य स्वीकृति-

प्रदानेनास्मान् तत्पुत्राः श्रीवटुकनाथशास्त्रिखिस्तेमहोदयाः श्रीकलानाथशास्त्रिणः, श्रीहरिप्रसादशर्माणः, श्रीप्रभाकरशास्त्रिणश्चानुगृहीतवन्त इति तेभ्योऽस्माभिरनेकशो धन्यवादाः समर्प्यन्ते। महामहोपाध्यायाः श्रीपरमेश्वरानन्दशास्त्रिणोऽस्मत्प्रार्थनां स्वीकृत्य गढवालप्रदेशस्यैतिहासिकघटनामेकां कथारूपेण विलिख्य प्रेषितवन्त इति नूनं तेऽस्माकं धन्यवादान् भृशमर्हन्ति। एवमेव श्रीमन्तो रामकुबेरमालवीयमहोदयाः, अस्मदग्रजाः श्रीदेवीदत्तशर्माणश्चतुर्वेदाः, श्रीमन्तो मान्याः बलदेवोपाध्यायाः, डा० गजाननशास्त्रिणः, श्रीमन्तो मधुसूदनशास्त्रिणश्चास्मदाग्रहेणात्र सद्य एव कथां निर्माय प्रदत्तवन्त इत्येते विद्वांसोऽप्यस्माभिस्साधुवादैरभ्यर्च्यन्ते। अन्ये च लेखकधुरन्धराः पूर्वप्रकाशितानां स्वीयरचनानामत्रसंग्रहे प्रकाशनाय स्वीयां स्वीकृतिं प्रेषितवन्त इति तेऽपि स्वीकुर्वन्त्वस्मदीयान् धन्यवादान्। श्रीमद्भिः द्विजेन्द्रनाथमिश्रमहोदयैः समये समये नानाविधपरामर्शप्रदानेनास्माकं मार्गप्रदर्शनं कृतमिति सर्वदैवास्मदुत्साहवर्धकास्ते समभिनन्द्यन्ते। अन्ते चैतत्पुस्तकप्रकाशकः भारतीयविद्याप्रकाशनाधिपतिः श्रीकिशोरचन्द्र महाशयोऽस्माकं प्रभूतधन्यवादपात्रम् येनौदार्येणास्य प्रकाशनमुपक्रान्तम्। आशासे विद्वज्जनैरनुमोदितेऽस्मिन् प्रयासे पुनरप्यन्यत्संस्कृतकथासंकलनं प्रस्तोतुं प्रयतिष्यामहे इति—

दीपावली
१६६६

निवेदक
शिवदत्तशर्मा चतुर्वेदः

# विषय-सूची

# कश्चित्कविः

स्वर्गीयः महामहोपाध्यायः श्री गिरिधरशर्मा चतुर्वेदः, वाचस्पतिः

( अ० भा० संस्कृत-साहित्य-सम्मेलनाध्यक्षः, संस्कृतसाहित्यस्य अन-
दाता महामहिम भारतराष्ट्रपति संमानित )

समापन्ना सायाह्निकी वेला। अहोरात्रमन्तर्यन्तं प्रस्तरं प्रतपति भगवान् मरीचिमाली, अथापि मार्गे निरुद्धप्रायं गतागतं लोकस्य। केचित्पण्यविनोदिभिः पाचितं सूपौदनादि व्यञ्जनशाकादिभिः सम्मिश्र्य सामिनन्दमभ्यवहर्तुं प्रवृत्ताः, परे भोजनार्थमाह्वानं प्रतीक्षमाणाः पाकशालां दृष्टिभिरापिबन्तीव। अन्ये 'गन्तासन्मात' भोक्तुम्, किं न चलसि ?" इत्यादिभिः स्निग्धा क्षुधातुरैर्वचोभिराहूयमाना सन्नद्धा इव भोक्तुम्। इतरे श्रमार्दितेषु परिश्रान्त्याङ्गैव समागता विश्राम्यन्ति। पशवोऽपि तत्र तत्र परिभ्रम्य घासेन जलेन च सन्तर्पितात्मान-मधुना छायावृक्षानिवाधिशेरते। एवंविध एव समये सरसि सुस्नात-श्चिरकृताह्निकक्रियः समर्चितदेवोऽस्माकं कविः शिष्यवर्गेण परिवृतः प्राविशद् ग्रामम्। इतस्ततः स्निग्धमधुरां दृष्टिं क्षिपन् वृक्षादिच्छायाया विश्राम्यतः प्रणयिनः संभाषणेन प्रसादयन् यावदेव गृहान् प्रविशति तावदेवागत्य मध्ये मार्गं प्रत्युवाच दासः "तात! भवदागमनं स्मरत्येव पितामही। न पानमपि गृहीतवती नवा भुक्ता, तत्-परिचर्यायामेव व्याप्ृता च जननीति पाकोऽप्यद्य न सम्पन्नः"। श्रुतमात्र एव वचसि कविरसौ त्वरया प्रविष्टो मातुः सदनम्। अस्वस्थाया अपि मातुः पुत्रदर्शनाद्यत्नान्वं गलितमिव दुःखम्। आसीदेवमनयोः संलापः। नास्य कवेः किमपि नामगोत्रादिकमस्माकं परिचितमिति कविनाम्नैवैनं व्यवहरिष्यामः।

प्रोवाच कविः—किमद्य सहसैव विशेषतो निमित्तमस्वास्थ्यस्य ?

माता—वत्स! वर्द्धते व्याधिरिह वार्धक्यवृद्धा मे निर्बलता। शीर्यन्तेऽङ्गानि, कतिपयानामेवाह्नां प्राघुणिकी। न चास्ति वाञ्छापि काचनमनसि। केवलमेक एव खेदो मनसि शल्य इव।

कविः—किं किं, को वा श्रीमत्या मनसि खेदः, किमिच्छति भवती।

माता—नास्ति कोऽप्यात्मकृते खेद । भवन्तमेव विमलाभिर्विद्या भिरिव शोभनाभि सम्पद्भिरप्युपेत चेद् द्रष्टु प्राभविष्यम्, ननु सफलो मे जीवलोकोऽभविष्यत्। यदृच्छोपनतभोजिनस्तु ते 'अश्वस्तनिकता' दुनोतीव माम्। बहुशश्च देशाधिपतिना कर्णेन राज्ञा समाहूतोऽपि भवान् न तमाश्रितवान्।

कवि — अहो! सोऽयं खेदस्तत्रभवत्या मातु । अपि जननि! सरस्वती रसिक मामिन्दिरादास्ये नियोक्तुमिच्छसि? अपि भवत्याश्च रणशुश्रूषा परित्यज्य धनोन्मदानाञ्चरण—शुश्रूषां शिक्षयसि?

माता—स एव ते दुराग्रहो यस्त्वा क्लिश्नाति। अनेनैव पिशाचेन समाकृष्टस्त्व सुखसाधनानि नाप्नोषि एतत्कृत एव कुटुम्बभरणमपि दु शक्य ते।

कवि —जननि! मैव वादी। विवेचय मनाक् स्वातन्त्र्ये यत्सुख तल्लवोऽपि सततमध्यक्षमुखप्रेक्षिभिस्तचाटुकरणमात्रसमापितकर्तव्यै तदुदितदुर्वचनशल्यपूरितकर्णकुहरैरात्मनिक्रयिभिर्जनैर्न नाम समा साद्यते स्वप्नेऽपि। भृतिकर्माणि वर्तमानस्य यो महान् क्लेशस्तल्लेशोऽपि यदृच्छोपनतमन्नादि फलादि वा यथेच्छ भुञ्जानस्य काले शयानस्य मे नास्ति। मात! सर्वथाह सुखी। तत्परित्यजतु चिन्तामिमां भवती।

किमप्युक्तेनितेव जगाद जननी आस्ताम्, यथा तेऽदृष्ट वर्तस्व तथा। त्वदुपाश्रयाणामपि जनानामस्मदादीना मनोमोषणमेव शरणम्। श्रुतमद्य ग्रामे कर्णाकर्णि—स एव राजा कर्णो वृद्धां स्वमातर काशीं लम्भयितु सपरिजन प्रयातीति। सैव ननु जननी यस्या सुत एव प्रभु, कुतोऽस्मदादीनामीदृश भागधेयम्।'

कवि —अहो! एतदर्थमिय भूमिका! प्रथममेव कुत स्पष्ट नाज्ञप्तोऽस्मि—काशीं जिगमिषति श्रीमतीति। मातर्मा शुच । अद्यैव त्वां नयामि काशीम्। सन्ति मदीया अपि परिजनाश्छात्रा ये शिबिकां ते सुखेन वक्ष्यन्ति। क्षेत्रोत्पन्नमन्नादि चेह बालानां मार्गे चास्माक कृते पर्याप्त भविष्यति। शाकफलादिक तत्र तत्र लप्स्यत एव। द्रक्ष्यति भवती स स्वदेश एव राजा, वयन्तु वीणापाणेर्देव्या प्रसादात् सर्वत्रैवाप्रतिहतप्रसरा ।

एतावदुक्त्वा उत्तरमप्रतीक्षमाण एव प्रबन्ध पिधातु निर्गत कवि । जनन्यपि हर्षविस्मयस्नेहशोकैर्युगपदाक्रान्ता तस्थौ।

[ २ ]

महता गजाश्वमनुजबलेन परिवृतः शिबिकाध्यूढनारीजनो
वाद्यघोषपुरस्कृतो बन्दीभिरनुक्षणं स्तूयमानः प्रयाति कर्णो नरपतिः
काशीम्। वृद्धा मातास्य तनुमपुनर्भवाय परित्यक्तुं काशीं वाञ्छति,
तत एवायं समारोहः। मध्येमार्गं यतो यतः संघ एष प्रयाति, तत्र
तत्रैव दर्शनोत्सुकानां बालवनितादीनां संमुखीनमायात्यपर संघः।
गजारूढो राजापि सर्वत्र पथि दृष्टिं किरन् प्रमोदमानस्तैस्तैरभिनवैर्दृ-
श्यैः खर्वयन् ग्रामान्, नगराणि, पर्वतान्, नदीश्च, सोत्कण्ठम् तांस्तान्
जनान् जनपदांश्च पश्यन्, सुहृद्भिः समालपन्, विस्मृत-स्वराज्य-सुख
सुखं प्रयाति। धूमयानमारुह्य रात्रौ शयाना एव ये योजनशतमतिक्रा-
मन्ति, तेषां देशाटनं तीर्थयात्रां वाभिनयनामपि नैष गोचरोऽनु-
भवस्यार्थः। तथाकृतपरिभ्रमणा एव तद्विज्ञातुं प्रभवन्ति। एकस्मिन्दिने
यावत्प्रयात्यनेनैव प्रकारेण बलमिदम्, तावदेव दृष्टं यत् पृष्ठतः
शास्त्रसंस्था-मुखरित पद्यगानप्रभृतिभिरावर्जितलोकः समालाप-
चतुरो धौतोत्तरीययज्ञसूत्रमात्रसर्वस्वानां ब्राह्मणानां कश्चिदपरोऽपि
संघ शिबिकामेकाम् जरत्याधिरूढामुद्वहन् पादचारिशिशुनारीजना-
नुगत समायातीति।

ज्ञायताम् किमेतदिति राज्ञाज्ञप्त कश्चिदनुचरो विदितवृत्तान्त
आगत्योक्तवान्—'महाराज! कविरयमस्मद्देशीय एव ग्रामवा-
स्तव्य, य श्रुतचरः श्रीमच्चरणै। अयमपि नयति काशीं वृद्धां मातरम्।
अन्तेवासिनोऽस्य बहव सहचराः, त एव शिबिकां वहन्ति, उपयुक्तं
च मार्गे शुश्रूषन्ते। जनन्याः शुश्रूषणे बहुतरामहिलमन्तःपुरमपि
सशिशुजनमनेन सहैवानीतम्। अन्येऽप्यस्य बहव सम्बन्धिन
सहचराः।' आकर्ण्य प्रथमं चिन्तितम् राज्ञा—'शौण्डीर्याद्राष्ट्रे
मयाहूतोऽपि नागत एष इदानीम्मार्गेऽनन्यगतिको मामेव श्रयिष्यते''
यदा तु चिरायालोकितम्—शार्दूल इव ग्रामं नैष स्वसंघबलम-
भ्यर्गमप्यनुपततीति, तदा दाक्षिण्यनिधिर्गुणैकगृह्यो नरपतिः सुयोग्यं
परिजनं कविसमीपे प्रणिधाय। जगाद च तन्मुखेन—"चिरादहं
सुकवे! भवद्दर्शनाकाङ्क्षी, तदिदानीमिहैवागम्यताम्। पथि काव्य-
सुधाभिः परितर्पयत्वस्मान् भवान्। मदैव यात्रापि भवतां निर्वहतु।
गजमश्वं रथं वा यथेष्टमारोहतु भवान्। ब्राह्मण्यपि भवत शिबिका-
मेकामलङ्करोतु। तेषु तेषु तीर्थेषु यथाभिरुचितं प्रददातु च जननी

त्तमा अपि जलप्रपातमसहमाना विद्विपन्तो घनालीं प्रचलयन्ति प्रभञ्जनमनवरतनि सृतैर्निश्वासवातैः। न कोऽपि क्वचिदालोक्यते पर्यटन्, झिल्ली-झाङ्कार एव नि स्तब्धतां भनक्ति।

अस्मिन्नेव वचसामगोचरे सुरम्येऽवसरे किमप्युत्तालमाकर्ण्यत आरात् प्रवृत्त पुरे सुमधुरो गीतिध्वनि। अहो माधुर्य्यम्! अहो लयः!! अहो सौष्ठवम्!!! क्षणादाकृष्टान्यनेन ध्वनिना ध्वनिनेव सहृदयानां जनानां चेतांसि। प्रसह्य एवायमुदकण्ठयल्लोकान्।

अहो! पतत्रिभिरपि दुष्प्रपनतमे सर्वत सुगुप्ते कर्णस्य राज्ञोऽन्त पुरेऽप्येष परिश्रान्तिपरवशैर्निद्रादरिद्रीकृतकरणशक्तिभिः परिजनैरनुपलक्षित प्रविष्ट एव। न केवलं प्रविष्टः; धूर्तेनानेन ध्वनिना तत्रैव विशेषत· प्रदर्शितम् प्रभुत्वमात्मीयम्।

कर्णकुहरप्रविष्टमात्रेऽस्मिन्नन्यादृशी एव दशा पट्टराज्ञा सञ्जाता। सा हि कुरङ्गीवोत्तब्धकर्णा, भुजगीव शिरो धुनाना, मयूरीवोन्नमितगात्री, शफरीव लुठन्ती, यत्सत्यमतितमामुदकण्ठत। पुनरुत्तिष्ठति, पुन शेते, श्रोत्रभावमेव सर्वेषामङ्गानामभिलपन्ती सर्वैरङ्गैः श्रोत्रयोर्निलीयत इव। कोऽप्येष मोहनो मन्त्र सर्वामपि विचारशक्तिमस्या अहरत्, शय्यायां शयानेन राज्ञा निभृतमस्या समालोकितम् चरितम्, तत एव किमियं प्रतिपद्यत इति परीक्षिपु स एव कृतकसुप्तोऽभवत्।

राजपत्न्यापि निपुणं निरीक्ष्य, मुहुर्निर्वर्ण्य गाढसुप्तमेव राजानमवधार्य परायत्तं चेतो वशयितुमपारयन्त्या समुत्थितमेव। सञ्जीकृतो नील-निचोल वपभयवारवमपवारकमुपरिकृतम्। भूषिता एव भूषणैर्भवन्ति राजमहिष्य, अथाप्यपगण्यनया धृतानि भूषणानि। उद्घाट्य पेटिकां निष्कासितानि जनदुर्लभानि बहूनि मौक्तिकादीनि, रत्नानि, सुवर्णशकलानि च, सज्जीकृतान्येतानि पात्रे। सर्वमिदं निमिषैरेव परिसमाप्य प्रावृतदियं ध्वनिमनुसरन्ती मनोरथमात्रसहचरी प्रासादान्निष्क्रम्य पुराद्बहिर्गन्तुम। राजापि निष्क्रान्तायां तस्यां तूर्णमुत्थाय खड्गसहायोऽनभिलक्षित एव तया पृष्ठत पर्यसरत्। महता प्रयत्नेन च्छिद्रमभिलक्ष्य गच्छन्ताविमौ पाटवेन वा तमोबाहुल्येन वा अनवधानेन वा निद्राभिभवाद् वा भवितव्यगौरवाद् वा न केनापि प्रहरिणाभिज्ञातौ। निर्गम्य नगराद् ध्वनिमेवानुसरन्ती राज्ञी नानिदूरमेव सरस्तीरे शिवालयमेकमासाद्यातिष्ठत्।

लक्षितं तया तत एवाभ्यन्तरात् प्रकोष्ठात् सुधामधुरो गीतिध्वनिरेष निर्गच्छतीति। तत इयं प्रकोष्ठान्तः प्रवेष्टुं कृतमतिरपि—"कथं प्रविशानि? कथमालपानि? न चेत् प्रविशानि किमागत्यात्र कृतम्? व्यर्थीभवति सर्वोऽप्येष यत्न।" इति लज्जौत्सुक्यसाहसादीनामन्तर्वर्तमाना कतिचित् क्षणानि दोलासमारूढान्तः साहसायैव जयपत्रमर्पितवती। स्थित्वा प्रकोष्ठकसमीपे मृदुचलाङ्गुलिना पाणिना कपाटौ शब्दाययन्ती मन्दमधुरमुवाच—'उद्घाट्यतां द्वारमिति'। राजापि यत्नेनात्मानं प्रच्छाद्य समीप एवावस्थितः।

निष्क्रान्तोऽभ्यन्तरतो ध्वनिः—"आः क एष कालेऽस्मिन्?" अहो! साश्चर्यं प्रत्यभिज्ञातः शब्दो राज्ञा—स एवैष महाशयः कविरिति। ततः साध्वसपरवशो यावच्छून्यं स्वान्तं विधत्ते, तावदुक्तं राजपत्न्या—'अहमस्मि महाराजस्य कर्णस्य महिषी, द्रष्टुमिच्छामि भवन्तम्।' आवृतद्वार एव कविरुवाच—"अहो किमिदम्? किमहमिदं शृणोमि? राजपत्न्यास्तत्रभवत्याः किमत्र कृत्यम्? क एष समयो दर्शनस्य?"

इत्थमाश्चर्यस्तिमितस्य कवेश्छन्दोरूपेण परिणता वागश्रूयत—

उन्मादाम्बुदवर्धितान्धतमसप्रच्छादिते मण्डले,
काले यामिकजागरप्रसुभगव्याकार्णकोलाहले।
कर्णस्यामुकदर्णवाम्बुद्रवावह्रेर्यदन्तः पुरा—
दायातासि तदम्बुजाक्षि! कृतकं मन्ये भयं योषिताम्॥

प्रत्यभिज्ञातं स्यात् पाठकमहोदयैरपि—यत् स एव कविः कृतमात्रसंस्कारो काश्यां निवृत्तः, तदा सङ्कल्पितं द्रविणं प्रदापयितुं राजसकाशमुपागच्छत्। सायं पुरे प्राप्तः पुराद्बहिरेव सरस्तीरे शिवमन्दिरे विशश्राम। वर्षाकाले तेनैवोदीरिता गीतिः, यस्या घटितः परिणामः।

राज्ञी तु तथा प्रत्याख्यायमानापि अवमानाद्धीनमन्यपि लज्जया निवार्यमाणापि, प्रेर्यमाणोत्कण्ठया पुनरेव जगौ—"नाहं भवन्तमात्मानं वा धर्मादपेते पथि पातयितुमिच्छामि, न किमप्यन्यद् ब्रवीमि। केवलमुद्घाट्य द्वारम् दीयतां दर्शनम्। अङ्गीक्रियतां सुवर्णरत्नराशिरूपः स्वगुणगणस्य गुरोर्लघुरुपहारः। दयस्व ननु। इत्थमनर्थशतमनाशङ्क्य कृतसाहसां मां मा प्रत्याख्याहि।"

अहह ! न तथाप्यपावृतं द्वारम्। पुनः पुनरुवाच कविः—"देवि ! न मे त्वया, न चैवंविधेन धनेन कृत्यम्। अननुमतस्य राज्ञा, त्वयैकान्ते वितीर्णस्य धनस्याङ्गीकारमप्यहं महान्तमनर्थमाकलयामि। तद्भगवति, क्षम्यताम् ! एषोऽञ्जलिः ! ननु गच्छ, यथागतम्। मा च पुनः साहसमेवंविधं कार्षीः।" इत्यादि। नान्ततः पारितं किमपि प्रतिविधातुं महिष्या। चिरं स्थित्वा निराशा निवृत्तैवैषा। राजाप्यनुपलक्षित एव कथमप्यग्रत एव न्यवर्तत। यथागतमागत्य प्रथमं राजा तथैवाशेत। तदनु महिष्यपि राज्ञा अविज्ञातमेव चरितमस्मीयमभिजानती विसृष्टाभिसारेव प्रसुप्ता। राजा तु कनकसुप्तोऽप्यनन्तरस्तदेव कवेः कलानैपुणम्, गीतिमाधुर्यम्, राज्ञीसाहसम्, कवेर्निर्लोभतां, धार्मिकादर्शं, कविस्वशक्तिं च चिरमनुध्यायन् 'कृतक मन्ये भयं योषिताम्' इत्यसकृदावर्तयन् कथञ्चिन्निशां व्यनैषीत्।

[५]

सज्जा राजसभा। सामन्ताः सर्वे स्व-स्वासने यथोचितमुपाविशन्। मन्त्रिणोऽन्ये च राजमान्याः यथास्थानं स्थिताः। राजापि प्रातरेव कृताह्निकस्त्वरितमाससाद सभाम्। एषोऽद्य किमपि विचिन्तयन्निव, उत्कण्ठित इव च प्रतिभाति किमिदमिति यावत्तर्कयन्ति सभास्तारा, आज्ञप्तास्तावदेव राज्ञा—साश्वगजरथपदातयः प्रधानाः सामन्ताः त्वरितं पुराद्बहिः शिवालयमुपेत्य तत्रावस्थितं विद्वांसं कविं गजारूढं शीघ्रं सादरमत्रानयन्तु इति। अनुष्ठितं सर्वैः राजशासनम्। कियत्कालस्यानन्तरन्तु समुपेत्य समभाषत नतशिराः सामन्तः "पृथिवीन्द्र ! ननु श्रीमद्भिराज्ञप्ता गताः सर्वे वयं तत्र। स तु जगद्विलक्षण-लक्षणः कविः किमपि नान्वमोदत। उक्तं तेन—"किं मे रथैरश्वैर्गजैर्वा कृत्यम् ? येनाहमेतावन्तमध्वानमानीतः ? यथाहमत्रायातोऽस्मि, तथैव निर्वृतशरीरोऽत्र सभामप्यासादयिष्यामि। यान्तु भवन्तः। नाहं भवद्भिः सहागन्ता, तदेतदाकर्ण्य देव प्रमाणम्।" राजा औत्सुक्यपरवशोऽप्याकर्ण्य कथञ्चित् स्थिरमनास्तस्थौ। क्षणं क्षणन्तु तमेव प्रतीक्षते। नियुक्तास्तद्वार्तागवेषणाय चराः। पृष्टो मन्त्रिप्रभृतिभिस्तद्विषये मदागमनसमय एव सर्वं ज्ञास्यथ—इत्येवोत्तरं दत्तवान्।

अथ सर्वैः सचमत्कृति प्रतीक्षमाणः कथञ्चिदाययौ कविः। पूर्वमेव निवेदिता वार्तां वार्ताहरैः श्रुतमात्र एव बहिर्द्वारपर्यन्तं प्रत्युज्जगाम सामन्त-परिवृतो राजा। महतादरेण च तमेतं कविं निनाय राजसभाम्। अर्घ्यादिभिः सम्पूजितं च चन्दनमाल्यादिविभूषितमेकस्मिन् महार्हे सिंहासने समुपावेशयत्। कृतार्थताञ्च स्वकीयां तद्दर्शनात् प्रकटयन् विश्रान्तमात्रमेवैनमुवाच—'सुकवे! कवितान्तरास्वादः पश्चाल्लप्स्यते, श्रुतं मया भवन्मुखात् कदाचित्—उकारोपक्रममेकं पद्यम् 'कृतकं मन्ये भयं योषिताम्' इति पद्यस्यान्तिमो भागः। तत्पुनरपि श्रोतुमुत्कण्ठितं मां कृपयाऽऽश्राव्य कृतार्थीकुरु। अलोचितं राज्ञा—एतच्छ्लोकमुखेनैव सर्वमपि रहस्यमुद्घाटितं स्यात् इति।' कविस्तु रहस्यं परिरक्षन्नेव तत्कालस्फुरितमतिः प्रत्याह—आं श्रूयतां श्रीमन्!

उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बनं
व्योम्नि भ्राम्यति दुर्गमाश्रितिभृतां मूर्धानमारोहति।
व्यालैः याति विषाकुलैरहिकुलैः पातालमेकाकिनी
कीर्तिस्ते मदनाभिराम! कृतकं मन्ये भयं योषिताम्॥१॥

अथ तथैतामप्रतिरुद्धप्रसरामस्य कवित्वशक्तिं तथा धर्मैकपरतां पररहस्योद्घाटनविधुरताञ्चालक्ष्य नितरां द्रुतान्तःकरणो राजा भूयो भूयोऽस्य पादतले लुलोठ। पृष्टः सामन्तैर्मन्त्रिभिश्च स्वयमेव सर्वं रात्रिचरितं जगाद। सर्वैः सह चैष कविं स्वातन्त्र्येण स्वसभामसितमामलङ्कर्तुं प्रार्थनयानुरुरोध। कविस्तु सर्वथैव सुमधुरं तत्प्रत्याचक्षाणो ग्रामे वसतिमेव स्वकीयां सुरदुर्लभां प्रतिपादयन् केवलं सङ्कल्पितं द्रव्यं ब्राह्मणेभ्यः प्रदातुं प्रत्ययाचत। गुणपरवशेन राज्ञा मूर्ध्निकृतं सर्वमपि कवेरनुशासनम्। कविस्तु न किमपि द्रव्यमात्मार्थमङ्गीचकार।

अथ भूयोभूयोऽनुरुध्यमानश्च जगाद—'यदि किमप्यवश्यं प्रदेयं श्रीमता मह्यम्, तर्ह्येतदेव ददातु—न सा राज्ञी किमपि वक्तव्या। न तया किमप्यनार्यमाचरितम्। ननु भवानिव सापि गुणैकगृह्या, न तु दुष्टमतिः। तस्मान्मत्प्रार्थितः पूर्वमिव तां स्नेहेन पश्येद् भवान्।

का गतिः। स्वीकर्तव्यमेव सर्वं विदुषोऽनुशासनम्। गुणग्राहितान्यथा भज्येत। स्वच्छन्दं यान्तमिदानीमस्माकं कविं गवाक्षेण कथमप्यालोक्येयमपि कृतार्थीभवतु राज्ञः कर्णस्य महाभिषिक्ता राज्ञी।

# प्रणय-पिपासा

स्वर्गीयः म० म० प० नारायणशास्त्री खिस्ते
( काशिकराजकीय संस्कृत महाविद्यालयस्य भूतपूर्व प्रधानाचार्य, अनेकाना संस्कृत ग्रन्थाना प्रणेता व्याख्याकारश्च, वाराणसी वास्तव्य )

कावेर्या पश्चिमे तीरे सुन्दरपुर नामान्वर्थाभिधानो ग्रामः शोभते। कुबेराचलाख्यस्य पर्वतस्योपत्यकाया विशाला सहकारवाटी, तामनु सुन्दरपुरग्राम प्रतिष्ठितः। एकत कावेरीतीरपरिसरप्रसृता तालतमालनारिकेलक्रमुकादिविशालवृक्षराजिपरिरक्षिता मध्यन्दिनेऽप्यर्कगभस्तिभिरनवाप्तप्रवेशा, झिल्लीझकारनादिता गभीराऽरण्यानी, अपरतश्च मल्लिकायूथिकाजातीमालतीबकुलचम्पकपाटलादिविविध-कुसुमद्रुमसमेधमानसौभाग्या विशालोपशल्यावलि । कुबेराचलवर्ति-निर्झरसमुत्क्षिप्ताम्भ क्षोदसमुद्वहनजातजडिमा, भारभुग्न इवमन्द-गतिः कल्यप्रफुल्लोपशल्यकुसुमसमूहपरिमलतस्करः पवनः सन्ततं सेवते सुन्दरपुरवासिसज्जनान् ।

ग्रामेऽस्मिन् विशेषतो राजन्या निवसन्ति, पञ्चषाण्येव विप्राणां गृहाणि, वैश्यानां शूद्राणां च मिलित्वा पञ्चाशदधिकानि सद्मानि, तावन्त्येव राजन्यानाम् । ग्रमाधिपतिर्वीरसिंह प्रख्यातवीरक्षत्रिय-वंशालंकारभूत प्रभूतभूसम्पत्तिमान् दर्शनीयाकृति प्रांशुर्विशालवक्षा वीराग्रणीर्वर्तते । ग्रामीणाः सर्वेऽपि आपन्नाभयदीक्षिते तस्मिन्-प्रगाढं स्निह्यन्ति, बिभ्यति च सुलभकोपात् प्रचण्डशासनात् तस्मात् । अग्रजातयो विप्राः किल पौरोहित्यवृत्तिमनुतिष्ठन्तः पञ्चमहायज्ञान् यथावद् वितन्वाना वेदानभ्यस्यन्तोऽग्न्याहिता सुखेन निवसन्ति ।

इत्थंविधे तस्मिन् सुन्दरपुरे ग्रामाधिपतेर्वीरसिंहस्यसूनुः प्रति-कृतिरिव निजपितु कुमारः शार्दूलसिंहो यौवनसुलभोत्कलिका समा-कुलचेता एकदा प्रसूत्यै स्वपितु सदनमुपगतां चिरप्रोषितां कावेरी-पूर्वतीरस्थलक्ष्मणपुरग्रामाधिपतेस्तनूजां स्वप्रेयसी दिदृक्षुरदृष्टप्रसूति पुत्रलाभप्रवृत्ति प्रहृष्टान्तरो मृगयाव्यपदेशेन गृहान्निष्क्रम्य श्वशुरालयं गन्तुमियेष ।

तदानीं प्रावृट्कालः प्रवृत्त आसीत्। कावेरीं समुत्तीर्येव पूर्वतीरवर्ति लक्ष्मणपुरमासादयितुं सुशकम्। नान्यः पन्था। कावेरीसमुत्तरणं विना नान्या गतिः। अत्रान्तरे पयोदपटलैर्नीरन्ध्रितं नभः। झञ्झावायुर्वातुमारेभे। एकद्वित्रिक्रमेण पतन्तो वर्षाबिन्दवः क्षणादिव धारासारात्मना वर्षन्ति स्म। निमीलयन्तीव जगन्नयनानि विद्युन्मध्ये मध्ये व्यद्योतत। न कोऽपि नाविकस्तदानीं शतेनापि द्विसितेनातरेण तरणिं मोक्तुमियेष। शार्दूलसिंहश्चिरं तान्नाविकाननुनीयाप्यकृतार्थः प्रबलोत्कलिकापारवश्येन तत्क्षणमेव गन्तुं कृतनिश्चयः क्षत्रियसहजेन साहसेनाध्यातस्तुरगपृष्ठ एव कावेरीं तर्तुं निरचैषीत्। करे वल्गां धृत्वा प्रवेशितस्तेन कावेरीजले तुरङ्गमः। स्वामिनो भावं विदन्निव स पशुरविगणय्य विघ्नान् चचाल। यावत् स किञ्चिद् दूरं गच्छति, तावदेवैको महानावर्तो ददृशे। शार्दूलसिंहस्तु वल्गामाकृष्य जलभ्रमपरिजिहीर्षया किञ्चिदपसृत्य तिर्यग् गन्तुमियेष। किन्तु तदानीं पाकाभिमुखदुरदृष्टप्रभावान्नु शार्दूलसिंहायुःक्षयान्नु येनाप्यचिन्त्येन हेतुना जलौघप्रबलवेगाभिहतोऽवशाङ्गः स तुरङ्गमस्तस्मिन्नेव भयानकेऽम्भोभ्रमे न्यपतत्। तुरङ्गपर्याणपार्श्ववर्तिलोहपाशिकासम्बद्धसोपानकपादः शार्दूलसिंहोऽपि सहाश्वेन प्रणयिनीमिलनोत्कलिकाभिश्च सह पातालमुपानीयत। इत्थं सतुरङ्गस्य तस्य जले पञ्चत्वं सम्पन्नम्।

तमेव क्षणमारभ्य संस्कारदेहधारी स प्रबलः पिशाचो भूत्वा कावेरीतीरपरिसरारण्ये बभ्राम। तेन पथा जनानां यातायातं दुष्करं समपद्यत। प्रायस्तेन पथा गच्छत्सु नैकोऽपि जीवन् परावर्तते स्म। अध्वगैरथ स मार्ग एव परित्यक्तः। न कोऽपि तेन पथा गच्छत्यागच्छति च। पिशाचोपद्रवस्य नानाविधाः किंवदन्त्यः सर्वत्र प्रसृताः। कश्चिद्वदति—दृष्टो मया स पिशाचः, तालप्रांशुर्भीषणास्यः किल स इति। अपरो वदति विपर्यस्तौ तस्य पादौ, लम्बन्ती जिह्वा, भ्रुकुटिभीषणं मुखम्, अध्वगान् दृष्ट्वैव स मुखं व्यादाय धावति। इत्थंविधाः किंवदन्तीः श्रुत्वा भीतैः पथिकैः स मार्ग एव परित्यक्तः। न कोऽपि तत्र परं तेन मार्गेण गच्छति। तन्मार्गपरिसरवर्तिषु क्षेत्रेषु कर्षणादिकार्यं कर्तुं [illegible] केऽपि कर्षका लभ्यन्ते। ग्रामाधिपतेस्तेन महती हानिः समजायत। तन्मार्गशोधनपुरस्सरं पिशाचोपद्रवनिराकृतये ग्रामाधिपतिना दशसहस्ररूप्यकात्मकं पारितोषिकमुद्घोषितम्। पारितोषिकलोभेन ये केचित् साहसेन पुरस्समुपागतास्तेऽपि जीवन्तो न पुनः परावृत्ताः।

इत्थमेवातीते कियतिचित् समये दुःखितेन ग्रामाधिपतिना स्वकुल-पुरोहितो भट्टसोमदेवः सानुनयं प्रार्थित —

भगवन् ! आचार्य ! किं नास्त्येव कश्चनोपायः तस्य परिशोधनाय पिशाचोद्धरणाय च ? सत्सु भवादृशेषु तेजोराशिषु सिद्धमन्त्रेषु ब्राह्मणेषु किं नेदं लज्जास्पदम् ? दशसहस्राणि मया दित्सित पारितोषिक किमल्पम् ? मन्ये सम्प्रति ब्राह्मणानां सिद्धमन्त्रत्व विडम्बनमेव ।

श्रुत्वेदं ग्रामाधिपतेर्वाक्य विद्ध इव शरेण ब्राह्मण्याधिक्षेपमसहमानोऽन्तः क्रोधेन ज्वलन्नपि निगूह्य त भट्टसोमदेवस्तमाह, राजन् ! अहमस्मि भवत्पुरोहितः, भवदन्नं भुञ्जानस्यैव पलित मे शिरः, न ममास्तिपारितोषिकप्राप्तेर्लोभः । भवता यद् ब्राह्मणानां सिद्धमन्त्रत्व विडम्ब्यते, तदसहमान एवाह पिशाचोद्धरणे मार्गपरिशोधने च प्रवृत्तो भवेयम् इति ।

अथ विदितभट्टसोमदेवप्रभावस्तस्य पिशाचोद्धरणप्रवृत्ततां दृष्ट्वा हृष्टान्तरङ्गो ग्रामाधिपतिर्वीरसिंह सपादोपग्रह समाह-गुरो ! क्षम्यतां ममातिक्रमः, पिशाचो-द्धरणकार्ये प्रवर्तयितुमेव ब्राह्मण्याधिक्षेपमिषेण मया कोपितो भवान् । सिद्ध च मम समीहितम् । ब्राह्मणा हि मम पूज्यतमाः । तथापि कुलगुरुर्भवान् मम सर्वस्वमेव । यत् किञ्चन मम वैभव यशश्च तत्सर्वं भवदनुग्रहादेव सम्पन्नमस्तीत्यहं जानामि । मम दुरुक्त भवता न मनसि स्थाप्यम् इति वदन् भूयो भूयः प्राशंसीत् ।

'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति नयेन ग्रामाधिपतिं प्रणत दृष्ट्वैव दयालोर्ब्राह्मणस्य कोप क्वापि पलायते स्म ।

अथान्येद्युर्भट्टसोमदेव पाथेयवस्त्रादिग्रन्थि निबध्य ग्रामाधिपतिं वीरसिंहमापृच्छ्य च पिशाचोद्धरणाय प्रतस्थे । प्रतिष्ठमानश्च विघ्नहराणि सूक्तानि जपति स्म ।

क्रमेणासौ स्वग्रामसीमानमुल्लङ्घ्य पिशाचाधिष्ठित वनमाससाद । तावता वियन्मध्यमुपतस्थे भगवान् भास्वान् । नैदाघोष्मा प्रकर्षेण ववृधे । वायोरनुष्णाशीतस्पर्शतां प्रतिपादयतस्तार्किकान् परिहसन्निव ज्वलदङ्गारमङ्गाशताप उष्णो वायुर्वातुमारेभे । पक्षिणोऽपि नीडान्तर्निलीय निभृतं तस्थुः । कुत्राप्यलब्धावकाशेव छाया तरुमूलमवालम्बत ।

तथाविधे समये श्रान्तो भट्टसोमदेवो विश्रमितुं दूरादेकं पिशाचाकार सुदूरप्रसृतमूल वटवृक्षं ददर्श । तद् दर्शनोत्पन्नहर्षप्रकर्ष

कियन्तं चिदध्वानमतीत्य तस्य वटवृक्षस्य सुदूरप्रसृतासु शाखासु बद्धान् तुरङ्गमानद्राक्षीत्। 'विश्रममिपवः केचित् पान्था भवेयुः' इत्यचिन्तयत् च। पुनरस्य चेतसि विकल्पः समुद्भूत्-'पिशाचाधिष्ठितोऽध्वगैः परित्यक्तः प्रान्तरोऽयमध्वा, कथमत्र पान्थानामागमनं सम्भाव्यते। भवतु यत् किमपि, समीपं गत्वैव सम्यक् परिलक्षयेयम्' इति निश्चित्य तं वटवृक्षमनुलक्ष्य भट्टसोमदेवश्चचाल। उपगम्य समीपं सकुतूहलमपश्यत्—विशाले वटद्रुमतले शोभनोऽनेकवर्णविचित्रः कुथः समास्तीर्णः। तदुपरि दुग्धफेनधवलः प्रच्छदपटः, हंसतूलकल्पितान्युपधानानि च सज्जानि। वीरासनोपविष्टास्तेजस्विनो वीरा इव लक्ष्यमाणा विंशत्यधिकाः शस्त्रधारिणः पुरुषा मण्डलाकारेण स्थिताः, तेषु मध्ये सुबृहदुपधानालम्बितपृष्ठ एकस्तेषां स्वामीव लक्ष्यमाणस्तेजस्वी शस्त्रपाणिः पुरुषः। मध्ये राजतं धूमनलिकापात्रं विराजते। ततः समुद्भूतः सुगन्धिधूमपरिमलो मोदयतीव मनांसि। भट्टसोमदेवमुपायान्तं दृष्ट्वा स तेषां शस्त्रिणां स्वामी सोल्लासं प्रणमन्नाह-'आगम्यतां पुरोहितमहाशयाः! अद्य सत्यमेव सुदिनं नः, इहास्यताम्' इति स्वासनस्य दक्षिणे समुन्नतमासनान्तरं निरदीदिशत्। भट्टसोमदेवस्तु तन्मुखात् 'पुरोहितमहाशय' इति सम्बोधनमाकर्ण्य 'कोऽयं मां पुरोहितं भणती' ति चिन्तयन् तन्मुखं निपुणं निरैक्षिष्ट। अलक्षयच्च स्वग्रामाधिपतेर्वीरसिंहपुत्रस्य शार्दूलसिंहस्य मुखच्छायाम्। सर्वेषां च तेषां नेत्राण्यपक्ष्मपातानि विभाव्य 'नूनमेते न मानवाः किन्तु देवयोनय एवेति' निश्चिन्वानो निर्भयचेताः प्रणमतस्तान् शुभाशीर्भिरभिवर्धयन् निर्दिष्टमासनमध्यरुक्षत्। अथ मुहूर्तं कुशलप्रश्नादिसंलापं विधाय स शस्त्रधारिस्वामी भट्टसोमदेवमपृच्छत् 'पुरोहितमहोदय! षट्सु ऋतुषु कतमो भवता प्रशस्यते।' चतुरो भट्ट उत्तरयति स्म—भिन्नरुचयो जनास्तान् तान् ऋतून् प्रशंसन्ति, अहन्तु शीतर्तुमेव सर्वश्रेष्ठं मन्ये, यतः स हि सर्वविधोपभोगक्षमः। पुनरभ्रूत शस्त्रिस्वामी-'कथं वर्षर्तुर्न प्रशस्यते भवता?' भट्टः प्रत्याचष्ट—सपङ्को दुर्दिनान्धकारितो वर्षर्तुः केन गुणेन प्रशस्यताम्? किञ्च, वर्षर्तुः प्रियामिलनोत्कलिकाकुलानपि यूनो निर्दयं प्रवृद्धसरिदावर्ते मज्जयतीति घातकप्रकृतेर्वर्षर्तोवर्णनं न मनागपि रोचते मह्यम्।

श्रुत्वेदं भट्टवचनं तत्क्षणमेव चकित इव स शस्त्रिस्वामी भट्टसोमदेवस्य करमादाय तन्मुखं निरवर्णयत्।

# पश्यतोहरः

स्वर्गीय भट्टमथुरानाथशास्त्री, कविशिरोमणि
( संस्कृतरत्नाकरपत्रस्य भूतपूर्व, अनेकसंस्कृतकाव्यग्रन्थप्रणेता, व्याख्याकारश्च, जयपुरवास्तव्य )

( १ )

वैशाखमासस्य भुवनभयानको नूनमातप सम्प्रति व्याकुलीकरोति जनान् प्राणिनश्चान्यान्। साम्प्रतं पूर्णो मध्याह्न। रवेस्तापः परां कोटिमारूढ।

अस्मिन् समये मधुपुरग्रामे धूमशकटविश्रामस्थानसन्निधानएव नन्दरामवणिजः समुद्घाट्यमान आपणोऽस्ति। वणिगस्मिन् समये भोजनसम्पादन एव व्यग्रोऽवलोक्यते।

एतावतैवापणोपरि वृद्ध एक साधुमहाशयः समुपस्थित। साधोरस्य पट्टायितललाटे विकटतया घटितं दूरतोऽपि दर्शनीयं तिलकं साम्प्रतं घर्मसलिलैः प्रवाह्य प्रवाह्य "न ते समुचितम्" इतीव निःसार्यते। लम्बशिखाभूषितं शिरः स्वेदभरक्लिन्नमस्ति। मुखमातपसन्तापेन समधिकमरुणमालोक्यते। वृद्धसाधोः पादौ जानुपर्यन्तं निबिडया धूल्या धूसरितौ स्तः।

साधोश्च पश्चाद्दण्डकमण्डल्वादिधारकः शिष्य एकोऽस्ति। आपणे आगत्यैव सपेक्षत्वं साडम्बरञ्च प्रोक्तं साधु महाशयेन—"अरे वत्स! किन्तु वृद्धसाधकायापि न्यूनमिहावकाशं दास्यसि? सम्प्रति मन्दिरमप्यस्य गेहं दूरवर्ति। शरीरं च मे न सोढुं शक्नोति साम्प्रतं मार्गगमनखेदम्। तदि न ते विपुलानि भाग्यानि यदि मुदि अत्र रात्रावत्रैव विश्रम्य श्वः प्रातरेव शिष्यग्रामं प्रयास्यामि। कथय भाग्यवन्! कस्ते आशयः?

नन्दरामवणिक् सर्वाङ्गपूर्ण एको भगवज्जन आसीत्। स हि प्रायशः समागतानां साधूनां सत्कारे शुश्रूषैव दत्तमना आसीत्। स चास्मिन् मध्याह्ने आतिथ्यकार्यनिपुणः पाकादिसमायोजनं कुर्वन्नासीत्। एतावतैव वृद्धेन साधुना दृष्टं भोजनपचनम्!

वणिग्वराकः सर्वं परित्यज्य प्रणनाम साधुप्रवरम्। साधुमातपे क्लिश्यन्तमालोक्य सकरुणस्य वणिजो मनसि भक्तिश्रद्धायाः प्रावःहस्रोतः।

साधोर्मध्यकाये धौतवस्त्रं, नहि नहि सम्पूर्णमक्षतवस्त्रमेव संश्लिष्टमालोक्यते। स्कन्धे रामनामाङ्कितमुत्तरीयं पतितमस्ति। मुण्डिते स्वेदजलमसृणितेऽत एव जाज्वल्यमाने मस्तके शाद्वलशालिनी शिखा आर्द्रकर्पटाच्छादिताऽस्ति। हस्तयोश्छत्रं प्रकाण्डो दण्डश्च याभाति। पादौ चोपानद्भिर्रहितौ स्तः। गले तुलसीमाला, वक्षसि च पीतवर्णं यज्ञोपवीतं विराजते। साधोः प्रभावशालिनीं मूर्तिं दृष्ट्वैव भक्तवणिक् "इमे पूर्णाः परब्रह्मसहचराः" इति मनसि कुर्वन् ससमादरं समभाषत-"श्रीमन्! कोऽत्र चिन्तावसरः! इदमपि श्रीमतां शिष्यस्यैव स्थानमस्तीति बुद्धया कृतार्थ्यताम्। प्रायो ये ये साधव आयान्ति ते ते दीनस्यास्य निवासे कुर्वन्ति कृपाम्, श्रीमन्तोऽपीह चरणरजो दत्त्वा पावयन्तु स्थानमिदम्"।

इदमुक्त्वैव च वणिजा जलपूर्णं पात्रमेकं दत्तं साधवे। साधुनापि सर्वमात्मीयं वस्तु न्यस्तमापणे। शिष्येणापि सर्वं दण्डकमण्डल्वादिकमुत्तार्य स्कन्धकर्पटेन प्रोञ्छितौ पादौ। वृद्धसाधुना जलेन झटिति प्रक्षाल्य पादौ प्रोक्तं वैश्याय—

"तर्हि वत्स! इदानीं साधूनां भोजनस्यापि कुरु सत्वरमायोजनम्। तुभ्यमपि चेद्रोचेत तर्हि ग्रहीष्यसि भगवत्प्रसादं तत एव। किमिति पृथक्पाकादि कृत्वा वृथा परिश्रमः सोढव्यः।"

पुनः किमासीत्? नन्दरामस्तु साधूच्छिष्टाय नितान्तमेव लालायित आसीत्। इदानीमात्मनो मनोरथानुकूलं दृष्ट्वा शीघ्रमेव सर्वं वस्तु स्थापितं साधोरग्रे। पाकसम्पादनस्थलन्तु पूर्वत एवासीत्सम्यक्तया सज्जम्। साधुरपि सर्वं सुभगमालोक्य सरभसमेव पाकनिर्माणस्थलोपरि आक्रमणमकरोत्।

साधुमहाशयस्त्वरितमेव सम्पादयामास मनोनुकूलं भोज्यम्। नन्दरामः साधुमहात्मनो निःसार्यमाणा नानाविधाः सामग्रीः, मृदु-

१. थाल।
२. घेरा।
३. चौका।
२

मधुराश्च वार्ता प्रत्यक्षीकृत्य कटकुकृतनिकेतनं भगवन्तं जगन्नाथं गृहोपस्थितं मेने।

सम्पन्ने पाके सोन्मादं शङ्खनादं कृत्वा ठणठुणदिति घण्टां ध्वनयामास साधु। नानाविधानि च स्तोत्राणि सगलास्फालनं समारभ्य भोज्यसामग्रीं धृतवान् ग्रन्थिनिष्कासितस्य नृसिंहस्याग्रे। विधिविधानेन च कृतवान् शङ्खोदकादि। तदनन्तरञ्च क्षुत्क्षामकण्ठायात्मनः शिष्याय, नन्दरामवणिजे च दत्तवान् भगवतः पावनं प्रसादम्।

प्रातःकालादनाहारो वराको वणिक् तावता प्रसादेनैव कथमपि तुतोष। विशेषतश्च साधोर्दर्शनेनैव नन्दरामभक्तस्तृप्तः समभूत्। तृप्ते मनसि क्वावकाशोऽन्यविषयस्य। इतस्तु किञ्चिन्मात्रेण प्रसादेनैव भक्तं सन्तोष्य सशिष्येण साधुमहात्मना यथेच्छं संहार आरब्धः। सर्वमपि पदार्थजातं जठरकोषागारे सरभसं न्यक्षिप्यत।

अन्ततः प्रसादलोलुपो वणिक् प्रतिदिनभक्ष्यापेक्षया अर्द्धेनैव भक्ष्येण सन्तोष्य जठरं प्रक्षालितहस्तमुखः साधोः कृते धूमपानपात्रं[1] सज्जीचकार। साधुरपि समर्पितसमस्तवस्तुस्तूपः कृत्वा च तदुत्तरकार्यं पृथगासने स्थितः साडम्बरं गडगडायमानं चकार धूमपानपात्रम्।

इतः साधूच्छिष्टलोलुपो नन्दरामभक्तः पुनरपि साधोर्भुक्तावशिष्टं भक्ष्यमन्विष्यति स्म। परं तत्र श्रीमता साधुमहात्मनैव साधुकृपा कृताऽऽसीत्। अस्तु यत्किञ्चिदासीत्तदेव शक्तिभक्तिगद्गदो वणिक् अभ्यवहर्तुमारभत। यावदयं भुङ्क्ते तावदेव श्रूयते स्म धूमशकट्या विकटश्चीत्कारः।

शब्दं श्रुत्वा ससम्भ्रमं जगादापणस्थाय साधवे वणिक्—"यदि बहिः कश्चन ग्राहकः समायायात्तर्हि श्रीमद्भिस्तत्र देया दृष्टिः। न स परावर्तेत। अयमेव मे जीवनोपायः।"

यावदयं संलापो भवति तावदेव पूर्णतया शृङ्गारितसर्वशरीरो बाबूमहाशय एको नन्दरामापणोपरि समापपात।

शृङ्गारिणोऽस्य शरीरं खडखडायमानाग्रबाहुभूषितेनाङ्गलचोलकेन समाच्छादितम्। कट्यां कृष्णान्त्यरेखमुज्ज्वलं धौतवस्त्रम्। स्कन्धे च सचातुर्यराशीकृतं सद्योधौतमुत्तरीयमेकं विलसति। पादौ चास्य

१. हुक्का।

चाकचक्यशालिभ्यां कृष्णवर्णाभ्यां वैदेशिकोपानद्भ्यां गूढौ स्तः। ययोर्हि गमनसमये "चर् मर्" इति शब्दो मुखरयति मार्गोद्देशम्। हस्ते च बाबूमहाशयस्य चाकचक्यशाली "पटसम्पुटकः"[2] द्वितीये च वेशगौरवभयादिव कम्पमाना सुभगा यष्टिरासीत्।

वैश्यो बाबूमहाशयं दृष्ट्वैव, अन्तः कोष्ठकादेव सादरमभाषत—"महाशया! क्षणं स्थिरता गृह्यतां धूमपानपात्रम्। तावदहमायामि"।

साधोर्नामग्रहणाग्रसरं। सर्वं वणिजैव वक्तव्यमुक्तम्। वैश्यस्त्वरितमेव हस्तमुखं प्रक्षाल्य बहिरागतो बाबूमहाशयस्य शृङ्गारसुभगां मूर्तिमालोक्य गौरवमिवोद्वहन् समभाषत—"कथं बाबूमहाशया! भोजनादिकं निर्वृत्तम्?"

बाबू०—नैव। इदानीं तु विलम्बो जातः। सायंभोजनमेव साधुतया भविष्यति। इदानीं तु किञ्चित् "जलपानमात्रं" करिष्ये।

"सम्यक् श्रीमन्!" इत्युक्त्वा वणिक् कान्दविकापणाद्[3] भक्ष्यमानीय बाबूमहाशयं भोजनाय सज्जीकृतवान्। बाबूमहाशयोऽपि नाममात्रेणैव "जलपानं" वस्तुतस्तु सर्वाङ्गपूर्णं भोजनं सानन्दमकार्षीत्।

[ २ ]

सर्वेऽपि रात्रिं भुक्त्वा, पीत्वा, शयित्वा सानन्दमयापयन्। नाभूत्तत्र विशेषः।

प्रातरेव जागरूकेण साधुमहात्मना दृष्टं यद्वणिगापणे नागदन्तिकोपरि[4] पीतं कौशेयाम्बरमेकं लम्बते। जगाद चाथ वणिग्भक्तम्—"वत्स! यद्यनुमन्यसे तर्हि पीताम्बरमिदं धृत्वा सन्ध्याह्निकादि विदधामि। शिष्यग्रामो दूरेऽस्ति, न जाने कदा वा तत्र प्राप्नुम। इत एवाह्निकादितो निवृत्तौ सुखं नो भविष्यति"

वणि०—महाराज! क्रीतस्यास्य दिनद्वयमेव जातम्। नैकवारमपि परिहितं मया। श्रीमता "प्रसादीभूतं" स्यात्तदा मे मनोऽभीष्टं भविष्यति। धारयतु श्रीमान्।

पुनः किमासीत्? सानन्दं परिहितं साधुमहात्मना। साडम्बरञ्च

१ बूट।
२ मनीबग।
३ हल्वाई।
४ खूटी।

दण्डकमण्डल्वादि इतस्ततः प्रसार्य, ऊर्णासनोपविष्टोऽक्षिणी निमील्य धृतगोमुखीकः परे ब्रह्मणीव लीनतां गन्तुमारभत ।

इतो बाबुमहाशयेन सम्यक्तया विभूष्याऽऽत्मानं स्वीयं च वस्तु गृहीत्वा प्रोक्तं वणिजे—"अयि वणिग्वर! ह्यस्तनजलपानस्य, सायंभोजनस्य च कियान् व्ययो जातः? कथयतु, इदानीमेवाऽहं सर्वं ददामि । आवश्यकं मे साम्प्रतमेव गमनम्"

वणिजा मनसि चिन्तितम्—"अतीव मे श्रमो जातः । व्ययोऽपि इतो भूयानभवत् । विना किमप्युपार्जनं न चलिष्यति ।" पुनर्मनसि गणितं कुर्वतेव प्रस्फुरिताधरेण प्रोक्तम्—"आम्, एवम् । सर्वं मुद्राद्वयं सार्द्धं पणपञ्चकं च जातम् ।"

बाबू०—अयि भोः! स्फुटपणानां तु कथैव गच्छतु । इदं तु वणिग्जनानां प्राकृतं कल्पनपाटवम् । तर्हि अष्टौ रूप्यकाणि परावर्तयतु भवान् । अहं दशरूप्यकमूल्यं शुल्कपत्रं[1] ददामि ।

प्रमुदितचेतसा वणिजा पेटिकातो रूप्यकाष्टकं निःसार्य समर्पितं बाबूमहाशयाय । धृतञ्च तत् पटसम्पुटकमध्ये बाबूमहाशयेन । अनन्तरञ्च यष्टिं गृहीत्वा प्रयातुमारभत बाबुमहाशयः । तद् दृष्ट्वा अतीव विनयेन प्रोक्तं वणिजा—"बाबुमहाशयाः! शुल्कपत्रम्?"

बाबू०—आम्, तदेव दशरूप्यकाणां यत्प्रदत्तम्!

वणि०—महाशय! क्व प्रदत्तम्? दातायैव तु स्मारयामः श्रीमते!

बाबू०—अरे कीदृशमातुरोसि? पूर्वं शुल्कपत्रं गृहीत्वा तदनन्तरं तु त्वया मुद्रा प्रदत्ता!

वणि०—नैव महाशयाः! विस्मरन्ति भवन्तः । स्वीयं पटसम्पुटकमुद्धाट्य पश्यन्तु! न वयं द्विवारं गृहीतारः ।

बाबू०—अरे न वयं द्विवारं प्रदातारः । भवानेव स्वीयां पेटिकां पश्यतु । भवतो वञ्चनापाटवं नात्र चलिष्यति ।

वणिजा मनसि चिन्तितम्—"अयं तु विचित्रवेषश्चौरः समायातः । हा तात! यः श्रोष्यति स मामेव मिथ्यावादिनं कलयिष्यति । गौरोज्ज्वलवेषमिमं तु सभ्य इति सर्व एव सत्यवादिनं वदिष्यन्ति । यद्वद्वस्तु, तद्वद्वस्तु यादृशाय तादृश एवोपयुज्यते । अयमिदानीमतीव प्रवृद्धः । आत्मस्वरूपप्रदर्शनंविना नायं मामकं दास्यति द्रव्यम् ।

१. नोट

इत्याकलय्यैव आपणादुत्प्लुत्य पथि समाजगाम, जग्राह च करेण बाबूमहात्मनः पटसम्पुटकम्। उभयोर्बभूव कराकरि समाक्रमणम्।

द्वयोरिमं भीषणसमाक्रमं दृष्ट्वा बहवो जना समाययु, चक्रुश्च प्रयत्नमस्य कारणावगमाय।

साधुमहाशय साम्प्रतमासने स्थितः प्रात सन्ध्यामिव कुर्वन्नासीत। स इमं लोककोलाहलं श्रुत्वा आसनादुत्थाय बहिराजगाम। लोकसंघाते प्रविश्य च किं किमिति वारं वारमुच्चरगादीत।

वणिक् साधुमहाशय समीपे दृष्ट्वा मनसि सुतरां प्रासीदत्। आसीच्चास्य विश्वासो यदत्रस्य साधुमहाशया. सभ्या वार्तां प्रकाशयन्तो भक्तस्य मे साहाय्यं करिष्यन्ति। परमिव सर्वा कथैव परावृत्ता।

अपृष्ट एव साधुमहाशयस्तोत्रेण स्वरेण सर्वानवदत्—'हरे! हरे! एवं तु वणिक् धार्मिक इव दृष्यते स्म, परं हन्त! हन्त!! अयन्तु सुतरामेव वञ्चकः!!! पश्यत सर्वस्व हरति!! पूर्वं तु सभ्यं पुरुषं रात्रौ बलादस्थापयत्। तत एकवारभोजनस्य मुद्राद्वयं व्ययमयाचत्। तदपि वराकेण धार्मिकेणाङ्गीकृत्य दशमुद्रामूल्यं शुल्कपत्रं प्रदत्तम्। अनेनापि तद् गृहीत्वाऽष्टौ मुद्रा परावर्तिता। परमिदानीं कथयति "न मे शुल्कपत्रं प्रदत्तम्" हरे! राम! कथमस्य भगवान् भव्यं करिष्यति। रे पामर! धर्मतोऽपि मनाग् बिभिहि! कण्ठकर्तनेन न कुबेरो भविष्यसि। सर्वत्र धर्मं दृष्ट्वा कार्यं साधनीयम्। सर्वं खलु भूतभावन परमात्माऽनिमिशमालोकते।

साधुमहात्मन कथामिमा श्रुत्वा सर्वेऽपि तदन्तिके समागत्य सर्वं वृत्तान्तं पप्रच्छु। सभयकम्पमिव प्राब्रवीत्साधु—

"सर्ववृत्तान्तश्रवणान् पूर्वं भवन्त पातकिनोऽस्य वणिजो द्वारात् प्रतिष्ठाविरहितं मा स्वमीप्टस्थलं यापयत! न जाने धकभक्तोऽयं बहुमूल्य ममापि सर्वं वस्तुजातं चेदपहर्तुमुद्यतः स्यात्तर्हि व्यवहारानभिज्ञस्य विपरीतं मे पतेत्। हन्त! हन्त!! अनेन वराकेण तु मदग्र एव शुल्कपत्र दत्तमासीत्। मया तु यदाऽमुष्मै रात्रौ मम भोजनमूल्यं दत्तमासीत्तदा तु मात्रपि कोऽपि नासीत्।

इदानीं सर्वे जना वराकं वाणिजमेव सावहेलं धिक्चक्रुः—'अरे राम! इमे तु साधुजना सन्ति, एभिः साकं च तवाऽयं व्यवहार! हा धिक्!"

एक प्रतिवेशी जगाद—"अरे नन्द! त्वमेव स्वयं निजमनसि

साधु०—नैव वत्साः! नैव! इदं तु सर्वैरेव दृश्यते यद्यूयं स्वग्रामजन विहाय नास्माक सहाया भविष्यथ! लोकस्य चरितमेवैतादृशम्। तथापि धर्मोऽपि किञ्चन वस्तु भवति। तस्यैकवारमेव न लोके लोपो जातः?

तृतीयोऽप्यस्मिन्नेव स्वरेऽगायत्—"साधुमहाशया! धर्मसेतोर्न सर्वथैव भङ्गो जातः। कुटिलेऽस्मिन् कलिकाले यद्यपि छलकपटादिभिर्जगत् परिपूर्णमथापि धर्मस्याङ्गमधुनापि वर्वर्ति। येषांचिन्मानुषाणां प्रवृत्तिः कल्मषकलुषिता, तेनापि किं भवति? अधुनापि संसारे धर्मस्य जागर्ति सर्वतोमुखो जाज्वल्यमानो मणिमयप्रदीपः, भगवान् जगदाधारो नाधुनापि कापि विलीन! यदि सर्वेऽपि उत्सृष्टसाधुपथाः स्युस्तर्हि भूवलय कथमिवकल्पयेत्यितिमात्मीयाम्।

अस्मिन् समये कपटसाधुना, वञ्चकबाबुना च प्राप्तः समुचितोऽवसरः। उभावपि मन्दमन्दं हसन्तौ तत्स्थानाददर्शनमुपाजग्मतुः।

वराको वणिक् आत्मन कपालमास्फोट्य, हृदय कथंचित् बलात्संस्थाप्य तयो पन्थानमनिमेष पश्यन् पाषाण इवाचलस्तस्थौ।

दृष्टो धर्मपथमवलम्बमानानां समयेऽस्मिन् परिणामः? धन्यः पूज्यपादः साधुमूर्द्धन्यः! सन्तजनभक्तिपरायणो वणिगपि च धन्य!!

धर्मपथस्थितो वराको नन्दरामवणिक् केवल हाहाकार भागी बभूव। परमानन्दभागिनौ च बभूवतु "लुण्टाकयतिः, वञ्चकबाबू च"।



# वीरमतिः

स्वर्गीयः श्रीसूर्यनारायणाचार्यः

( संस्कृतरत्नाकरस्य भूतपूर्वसम्पादकः, जयपुरवास्तव्यः )

गुर्जरदेशे टुकटोडानामकमेकं राज्यमस्ति। कदाचिदत्र राजाजीनामकः कश्चिद्वाघेलावंशीयो नरपतिश्शासनमकरोत्। अमुष्य भूपतेरेकः पुत्रोऽभूद्, द्वितीया च पुत्री। पुत्रस्य वीरज इति कन्यायाश्च वीरमतिरिति नामाभवत्। एषा वीरमतिर्बाल्यादेव प्रभृति शस्त्रास्त्रसञ्चालनमभ्यस्यन्ती हयारोहणादिकासु वीरजनोपयुक्तासु सर्वास्वेव कलासु परां प्रौढिं प्राप। यद्यप्येषा स्वज्येष्ठभ्रातुर्वीरजात् कनिष्ठाऽभवत्, तथापि बहुष्ववसरेषु लक्ष्यवेधविषये—ततोऽप्यधिकं हस्तलाघवमदर्शयत्, एवमियं स्वीयेन युद्धकलाकौशलेन स्वजनकं नितान्तमतोषयत्। अथैवं लालनपालनाभ्यां पोष्यमाणा वीरमतिः क्रमशः विवाहयोग्या बभूव। राजाऽपि च स्वकन्यानुरूपस्य वरस्य प्राप्तये महान्तं प्रयत्नमातिष्ठत्। अन्ततो मालवाधिपतेरुदयादित्यस्य जगदेवनामानं कुमारं निजमनःसंकल्पितैः सर्वैरपि गुणैर्भूषितमपश्यत्। ततश्च तेनैव सह तस्याः पाणिग्रहणसंस्कारमकरोत्।

अस्मिन्नेव समये सुगृहीतनाम्नोर्भोजविक्रमयोः कुले जातः श्रीमानुदयादित्यनामा मालवाधिपतिरासीत्। तस्य च द्वे राज्ञ्यावास्ताम्, प्रथमा वघेलनी द्वितीया च सोलङ्किनी। तत्र प्रथमायां वघेलन्यां राज्ञः परं प्रेमाभवत् सौलंकिन्यां च न। वघेलन्यां रणधवलनामा ज्येष्ठः सौलकिन्यां च जगद्देवो नाम कनिष्ठः पुत्रो जातः। रणधवलो यद्यपि ज्येष्ठोऽभूत् तथापि बुद्धिमान् वीरश्च नासीत्। जगद्देवश्च कनिष्ठत्वेऽपि वीरो बुद्धिमान् कलाकुशलश्चासीत्। ततश्च यथा यथा सोऽवर्धत तथा तथा तस्य गुणानां प्रशस्तिः प्रासरत्, एकां तस्य विमातरं वघेलनीं विहायान्ये सर्वेऽपि जनास्तस्मिन्नस्निह्यन्। राज्ञोऽपि च तस्मिन् महाननुग्रहोऽभवत्। वघेलन्यै तु यथा निजतनयस्यायोग्यत्वं नारोचत तथैव ततोऽप्यधिकं वा स्वसपत्न्याः पुत्रस्य योग्यत्वमपि नारोचत। अतः सा तस्मै नितरामसूयत्। परं राजा तस्यामनुरक्तोऽभवत्।

अतः सा समये समये पुत्रसहितायाः स्वसपत्न्या मिथ्यापवादैस्तस्यै तमरोपयत्। एवं क्रमशो राजानं कोपयन्ती सा पुत्रसहितां तां सोलङ्किनीं शुद्धान्तनामनि ग्रामे प्रैषयत्। यो जगद्देव सहितायै सोलङ्किन्यै राज्ञा निर्वाहार्थमदीयत। सोलङ्किनी तु धीरा साध्वी चाभूत्। अतः सा तत्रापि सुखं निवसतिस्म। बघेलन्या तु दिने दिने तथा कपटबन्ध आरचितो यथा सोलङ्किन्या पुत्रस्य जगद्देवस्य राजसभाप्रवेशोऽपि निषिद्ध।

एवं कष्टदशायामपि वर्तमानो जगद्देवो विंशतिवर्षवयस्को बभूव। एकस्मिन् दिने निजन्यायालयोपविष्टायोदयादित्याय राज्ञे कश्चित् सामन्तो जगद्देवस्य हीनावस्थां न्यजिज्ञपत्। सोऽपि तदाकर्ण्य पुत्रप्रेमार्द्र-हृदय सन् तत्क्षणादेव जगद्देवमाजुहाव। समयातं च तं हीनवेषं विलोक्य सञ्जातकरुणो राजा तस्मै बहूनि महार्हाणि वस्त्राण्यदापयत्। स्वीयं खड्गं वाजिनं च स्वयं तस्मै प्रादात्, एष च सर्वोऽपि वृत्तान्तो बघेलन्या अपि कर्णगोचरो बभूव। सा तु च्छ्रुत्वा तलब्धाहुतिरनल-ज्वालेव नितान्तमदीप्यत। सायं सामायातं स्वस्वामिनं चोवाच "स्वामिन् ज्येष्ठं विहाय कनिष्ठस्य पुरस्करणं सर्वथा राजनीतिविरुद्धम्। रणधवलश्च भवतो ज्येष्ठः पुत्रोऽस्ति। अतो भवतः खड्गाश्वयोस्त-स्यैवाधिकारोऽस्ति नतु जगद्देवस्य। अतस्त्वरितं त्वं स्वीयौ खड्गाश्वौ जगद्देवात्प्रत्यानय, नोचेत् प्रायोपवेशनं मे स्यात्" इति। तन्निशम्य नरपतिराह "प्रिये यदि कश्चित्क्षुद्रोऽपि जनः कस्मैचित् किञ्चित् ददाति तर्हि सोऽपि स्वहस्तदत्तं वस्तु प्रत्यादातुं लज्जते, अहं पुनर्नृ-पतिरस्मि, तत्कथमहं स्वहस्तदत्तं वस्तु प्रत्यानयेयम्"। एव-मुक्तवति राज्ञि हठसमारूढा सा राज्ञी सर्वथैव प्राणान् हातुमुद्यता बभूव। राजा तु तस्यास्तां दशामालोच्य विवशो भूत्वा पुरस्कारसहितं जगद्देवं पुनराकारयामास। पुनरुपस्थितं च तं जगाद—"पुत्र, चेत्वं मामनुरञ्जयितुमिच्छसि तर्हि मद्दत्तौ खड्गाश्वौ प्रत्यर्पय,"। जगद्देवस्तु तदाकर्ण्य खिन्नमना सन्नुवाच—"तात नैवं भवदभिलापः, किन्तु मम विमातुरेवास्तीत्यहं सम्यग्जानामि, अहं राजन्यसूनुरस्मि, नाहं धनाभावात्किञ्चिदपि बिभेमि। स्वखड्गस्य बाह्वोश्च प्रतापादहं यत्रैव गच्छेयं तत्रैव जीविकां लभेयेत्यस्ति मे सुदृढो विश्वासः इदानीं यावद् विपदभिभूतोऽप्यहं भवदनुरागमनुस्मरन्नत्र न्यवसम्, अद्य च मया सम्यक् परीक्षिता भवत्प्रीतिः। तदद्य कर्मवशाद्यत्रैव मे गति-

र्भविष्यति तत्रैवाहं गमिष्यामि। एष च खड्गः, अयचाश्व, " इत्युक्त्वा खड्गं तत्रावस्थाप्य घोटकं च द्वारि विमुच्य जगद्देवस्ततः स्थानात् प्रचलितः। स्वयं राज्ञा तत्सामन्तैश्च बहुधा प्रबोधितोऽपि खड्गाश्वौ दातुं पुनरुक्तोऽपि च न कथचिद् विरराम।

एवं राजद्वारात् प्रस्थितो जगद्देवः प्रथमं स्वमातुः समीपे गतः। तत्र च सर्वोऽपि वृत्तान्तस्तस्यै निवेदितः। पुत्रस्य प्रवासोद्योगमाकर्ण्य तस्या मातुः सर्वाणि गात्राणि श्लथानि जातानि, नेत्राभ्यां बाष्पबिन्दवोऽपतन्। कण्ठो निरुद्धः, मुखं शुष्कम्, शरीरे च वेपथुः सञ्जातः। यथा गहनवनमध्ये विचरतः कस्यचिदशरणस्यान्धस्य करात् कोऽपि यष्टिकामाहरेत् तथैव जीवनाधारभूतस्य तस्य पुत्रस्य विश्लेषस्तामखेदयत्। परं किं कुर्यात् सा मन्दभाग्या। नासीत् कश्चिदुपायो विपद् विनाशाय। अन्ततः सा कथंचिद् हृदयमवस्थाप्य बाष्पबिन्दुभिः प्रणमतः पुत्रस्य मूर्धानमभिषिञ्चन्ती जगाद "वत्स यद्यपि त्वद्विश्लेषजः शोकः काष्ठाग्निरिव दहति मे हृदयम्, तथाऽपि परमसमानसुखार्हो राजपुत्रस्त्वमनर्हं खल्वमुष्य निरादरस्य। तद्गच्छ, भद्रं ते भूयात्। शिवास्ते सन्तु पन्थानः"। एवं जननीमनुमान्य, शस्त्राणि संयोज्य, वाजिनं समारुह्य, देवता प्रणम्य, बाष्पवर्षं वर्षन्त्या मातुः पुनः पुनर्मुखमवलोकयञ्जगद्देवष्टुकटोडाभिधं श्वशुरपुरं प्रति प्रचलितः।

तत्र नगरे गतश्च कस्मिंश्चिदुद्याने हयपृष्ठादवतीर्णस्तमश्वं वृक्षमूले बन्धनेन नियुज्य स्वयं तत्रैवाशेत। विधिवशादस्मिन्नेव समये राजकुमारी वीरमतिस्तस्मिन्नेवोद्याने विजिहीर्षुः समागच्छत्। याचाऽस्य पाणिगृहीती बभूव। आगतैव च सा काञ्चिद्दासीं कानिचित् फलान्यवचेतुं तत्रैव प्रदेशे प्रेषितवती यत्र जगद्देवोऽशयिष्ट। दृष्टमात्रं च तं दासी पर्यचिनोत्। द्रुततरं प्रतिनिवृत्ता च तं वृत्तान्तं स्वभर्तृदारिकामश्रावयत्। उद्विग्नमना अपि सा, असम्भवतया प्रतीयमानेषु तद्वचनेष्वविश्वस्य स्वयं तत्र जगाम। तत्र च जीवितेश्वरमेकाकिनं शयानं दृष्ट्वा वयोवृद्धां दासीं दूरतः कृत्वा शनैस्तमजागरयत्। जागरितश्च स प्राणप्रियां तां तत्रोपविष्टामवलोक्य विस्मित इव तस्याः कुशलमापृच्छय तया पृष्टश्च स्वीयं तत् तस्यै निवेद्य स्वागमनकारणमाप्ति सर्वमकथयत्। उवाच च "परदेशं यियासतो मे मनो भवत्या मुखचन्द्रनिरीक्षणाय नितान्तमेवोत्कण्ठितमभवदतोऽत्र समागतोऽध्वश्रमापया-

पनाय यथैवाग्रोद्यानेऽस्वप तथैव भवती माम् जागरितवती । इदानीं च सपन्नमनोभिलाप मामनुमन्यता भवती विदेशगमनाय"। तदाकर्ण्य वीरमति प्राह "नाथ न खलु कदाचिदपि मा विमुच्य भवता गन्तव्यम्, अह भवतोऽर्द्धाङ्गिनी भवामि । यद्यपि दक्षिणबाहु सदृश साहाय्य कर्तु न पारयेय तथाऽपि वामसदृशमवश्यमेव भवत उपकरिष्यामि । दर्शयिष्यामि च समये समुपस्थिते स्वीय वीराङ्ग नात्वम् । तदनुमन्यतां मां सहप्रवसनाय स्वामी । किं च भवच्छुभा ऽऽगमनवृत्तविनिवेदनाय दास्यो राजप्रासाद गता सन्ति । तद्भवत्स्वा· गताय समायातो मे भ्राता, तेन सह राजहर्म्येषु गत्वा द्वित्राणि दिनानि चात्र विश्रम्यावां सहैव प्रस्थास्यावहे" । एव ब्रुवत्यामेव तस्यां तस्या ज्येष्ठो भ्राता वीरजो बहुभिर्जनैर्विविधैश्च वाहनैः सह समायात' । तावुभावपि परेण प्रमोदेनान्योन्यमालिङ्गितवन्तौ । श्यालेन सह राज सदसि गतो जगद्देवो राजजीनामान स्वश्वशुरमभिवाद्य कुशलप्रश्ना- नन्तर सर्व स्ववृत्तान्त निगद्य "श्वोऽहमित प्रस्थाताहे" इत्यपि न्यवेदयत् । स्वजामातुस्तानुभावपरिपूर्णान् विचारानवबुध्य परम- प्रीतो राजा तमाह "इदमपि राज्य भवत एवास्ति । अतो भवद्भिरत्रै- वावस्थातव्यमित्यस्ति न' परमोऽभिलाप " । ततोजगद्देव पुनरब्रवीत् "इदमपि गृह ममैवास्तीति यद्यपि सत्य वचस्तथापि विदेशगतेन मया स्वभाग्य परीक्षाऽवश्यमेव करणीया । अतो मामाज्ञापयतु तातो विदेशयानाय" । एवमालप्य श्वशुरस्याग्रहवशाज्जगद्देव कानिचिद्दि नानि तत्रैव निनाय । प्रस्थानात् पूर्वञ्च सहगमनाग्रहत्यागाय स वीरमतिं बहुशोऽबोधयत् । पर न सा कथमप्यमन्यत । प्रत्युत ' चन्द्रि- का चन्द्रस्येव, विद्युन्मेघस्येव, छाया पुरुषस्येव चाह भवत्साहचर्य विहातु सर्वथैवासमर्थाऽस्मि । विशेषतश्चास्यां कष्टदशायामि" त्यब्र वीत् । एव तां भक्तिमतीमाग्रहारूढां चावलोक्य श्वशुरश्यालप्रभृ- तीन् सर्वान् जनानापृच्छ्य, वीरमतिमश्वपृष्ठे समारोप्य स्वय चारुह्य तत प्राचलत् । राज्ञा प्रेषिता येचिदन्ये जना राजसूनुर्वीरजश्च ताभ्यां दम्पतिभ्यां सह कियद्दूर गता । निवर्तनकाले वीरज' स्वस्वसृपतिं प्राह "इत स्थानात्, टोडाग्राम एतेन पथा चतुर' क्रोशान् द्वितीयेन च विंशतिक्रोशानस्ति । पर लघु पन्था दुर्गमो दुष्टपशुमधिष्ठित- श्चास्ति, तद् भवद्भ्यां दीर्घेणैवाध्वना गन्तव्यम्' इति । एव वीरजेन बहुधा बोधितावपि तौ दम्पती बाहुबलाभिमानात् तद्वचनमनादृत्य

लघुनैव पथा प्रचलितौ। किंयद्दूरं गतयोरेव तयोरेका व्याघ्री पुरतः समायात्। तामालोक्य जगद्देवो बाणेन तच्छिरोऽविध्यत्। विद्धशिराश्च सा व्याघ्री जगदेवशिरसि प्रहारं दातु तथा द्रुतमद्रवद्यथा स खड्गवहिष्करणायाऽप्यवसर न लेभे। वीरमतिस्तु स्वस्वामिनं मृत्युमुखप्रविष्टमिव मत्वा मध्य एव तां तथाऽताडयद्यथा छिन्नमूला लतेव सा सहसैव भूमावपतत्। कालकवलान्निवारितो जगद्देवस्तु जगदेव परमेश्वरं तुष्टाव। स्वसहधर्मिण्या वीरतया च विस्मितः प्रसन्नश्चाभवत्। एवं पतितायामेव व्याघ्र्या वीरमत्या स्वपतेरिव स्वभार्यायाः साहाय्यं कर्तुकामो व्याघ्रो महतो जवात् तावभिहन्तुमभ्यद्रवत्। आगच्छतस्तस्य शरीरे वीरमत्या बाणे प्ररोपितेऽपि न पुनरुत्थितमवलोक्य जगद्देवस्तं तथा प्राहरत्, यथा न स पुनः सकृदप्युत्पतितुं प्राभवत्। एवमन्योन्यसदृशशौर्यौ तौ जायापती तमध्वानमतिक्रम्य टोडग्रामे सम्प्राप्तौ तत्र चैकस्य सरसस्तीरे विश्रमार्थ मुपविष्टौ।

जगद्देवस्य स्यालो धीरजस्तु स्वनगरं प्रतिनिवृत्य यथा तयो लघुना मार्गेण गमनं पित्रे न्यवेदयत् तदा स राजाऽत्यन्तमभैषीत्। "हिंस्रपशुविहतयोर्मम पुत्री जामात्रोर्शवसंस्कारो वा कर्तव्यः। विहतहिंस्रपश्वोस्तयोः कुशलवृत्तान्तो वा शीघ्रमानेयः" इत्युक्त्वा च कांश्चिज्जनान् शीघ्रमेव तेनैव पथा प्रैषयत्। गच्छन्तश्च ते जना मार्गे व्याघ्र व्याघ्रीं च मृते अपश्यन्, कश्चित् पुरुष काश्चित् स्त्रियं वा न। तेन प्रमोदमानास्ते टोडग्रामे तावुभावपि सकुशलाववलोक्य ताभ्यां च मार्गेतिवृत्तं सम्यगवबुध्य पुनश्च प्रतिनिवृत्य तत्सर्वं राज्ञे न्यवेदयन्। स च स्वपुत्रीपराक्रमकथा निशम्य नितरामहृष्यत्।

सानन्द यात्रां कुर्वन्तौ जगद्देववीरमत्यौ तु कतिपयैरेव दिनैः पाटननगरे संप्राप्ते। तत्र च सहस्रलिङ्गनाम्न सरसस्तटेऽत्राभ्यामवरुह्य कञ्चित् क्षणान् वृक्षच्छायाया विश्रम्य तत्र पूरे कानिचिद्दिनान्यवस्थातुं निरणैष्टाम्। ततश्च जगद्देवो वीरमतिं प्राह "प्रिये! यावदहं नगरं गत्वा कस्यचिद् गृहस्य व्यवस्थां कृत्वा निवर्त्स्यामि, तावत्त्वमत्रैव सम्यगवहिता तिष्ठ"। तदाकर्ण्य "ओम्" इत्युक्तवत्या वीरमत्या जगद्देवो पुरं प्रविष्टो वीरमतिश्च तुरगौ तरुमूले निरुध्य स्वयं तत्रैवोपविष्टा।

अस्मिंश्च पाटनपुरे डूगरसिंहनामा कश्चित् संकरवर्णः कोटपाल आसीत्। तस्य च परमदुराचारो लालकुमारो नाम पुत्रो जामीवी-

नाम्न्या कयाचिद् वेश्यया मैत्रीमबध्नात्। परमसुन्दर्या अपि तस्या लावण्येनासंतुष्यन् स तामुवाच "दयिते यदित्वं काञ्चित्त्वत्तोऽपि रूपवत्तरां बालां लभेथास्तर्हि तां मदर्थमानय, तथा कृते त्वामहं बहुलेन धनेन सतोषयिष्यामि" इति। तथव पारितोषिकावाप्तिसंभावनया सा वेश्या कस्याश्चिद्वराङ्गनाया गवेषणाय नितान्तमवहिताभवत्। जलाहरणार्थं सहस्रलिङ्गसरस्तट गता काचित्तस्या एव वेश्याया दासी तत्रोपविष्टां वीरमतिमपश्यन। तत्सौन्दर्यसमाकृष्टहृदया च सा तस्याः समीपे गत्वाऽऽत्मान पाटननृपते सिद्धराजस्य महिष्या दासीं प्रख्याप्य तस्याः सर्वमपि वृत्तान्तमवजगाम। द्रुततर च गत्वा स्वस्वामिन्यै जामोतीनाम्न्यै वेश्यायै न्यवेदयत्। सा तु श्रुत एव तस्मिन् वृत्तान्ते वञ्चनया वीरमतिं लालकुमारेण सजिगमयिषु स्वरथमतिशीघ्रं सज्जयामास। स्वय च महार्हाणि वस्त्राभरणानि परिधाय तस्मिन्नुपाविशत्। पञ्चविंशतिमश्वारोहांश्च स्वरथस्य पृष्ठतो नीत्वा तस्यैव सहस्रलिङ्गसरस्तीरं जगाम। तत्र सम्प्राप्ता च सा दृष्ट्वायामेव वीरमत्यां परिचितामिव तामुवाच "वत्से! तव पितृहृदयादित्यस्याहं स्वसास्मि। पाटनराजस्य सिद्धराजस्य च महिषी भवामि। जलार्थमागता मे दासी त्वदागमनवृत्तं मामकथयत्। तव पतिर्जगद्देवोऽपि च राजसदसि संप्राप्तोऽस्ति। अतस्त्वदर्थमागतया मया सहास्मिन् रथपृष्ठे समुपविश्य राजप्रासादेषु गच्छ। अस्मदीयमातिथ्यं चाङ्गीकुरु"। एवमुक्तवत्यां तस्यां तस्या सरलैः स्निग्धैश्च वचनैर्वञ्चिता वीरमतिर्वस्त्राभरणैः सेवकसघैश्च तां राजमहिषीं मत्वा भाविवशात् तया सह तस्याः सदनं जगाम। तस्या वेश्यायाः सदनमपि च राजसदनसदृशमेवासीत्। अतस्तत्र गताया अपि वीरमत्याश्चेतसि न कश्चित्सदेहः समुदभूत्। परं महति विलम्बे जातेऽपि जगदेव तत्राऽनागतं दृष्ट्वा सा तद्विषये पप्रच्छ। ततश्च तस्या वेश्याया दासीनामेका दासी बहिर्गत्वा किञ्चित्कालानन्तरं च पुनरेत्य तामुवाच "राजकुमारः श्रीजगदेवो राजसेवाया तिष्ठति। ततश्च कथाविच्छेदभयादवसरमनुपलभ्य नागन्तुं शक्नोति"। एतेनोत्तरेणैपरितुष्टा वीरमतिर्भोजनकालपर्यन्तं पुन प्रतीक्षमाणाऽतिष्ठत्। तस्मिन् समये तु महिषीमन्यया तया वेश्यया बहुश प्रबोधिताऽपि न बुभुजे। तस्यास्तमाग्रहमपनेतुमसमर्था सा कपटमहिषी यदा न कञ्चिदुपायान्तरमपश्यन् तदा कपटमारचय्य पुन. कांचिद्दासीं जगद्देवमाकारयितुं प्राहिणोत्। कपटपटुः सा दासी

स्वल्पकालानन्तरं प्रतिनिवृत्य जगद्देवस्य राज्ञा सह भोजनं रात्रौ दशवादनसमये च तत्राऽऽगमनमख्यापयत्। रात्रौ तु दशवादनसमयेऽपि स्वस्वामिनोऽनागमनात् खिद्यमाना वीरमतिं सा कपटमहिषी प्रोवाच—'तव शयनार्थमुपरितनं भवनं सज्जीकृतम्। तत्र च पृष्ठस्थितेन द्वारेण कुमारो जगद्देवोऽप्यागतः। तद् गच्छ सप्रमोदं स्वपिहि"। तन्निशम्य पतिदर्शनपर्युत्सुका वीरमतिः सहर्षं तत्र मन्दिरे प्रविवेश। तत्र च स्वामिनमनवलोक्य कञ्चिदन्यमेव च पुरुषं तत्रोपविष्टं विलोक्य तां वञ्चनामबुध्यत। परं न सा विभयाञ्चकार, नाऽपि चाधीराऽभवत्। परमात्मनः पातिव्रत्यपरिपालनाय कञ्चिदुपायं पर्यालोचयन्ती सा तस्य कोटपालपुत्रस्य लालकुमारस्य समीपे खड्गं विलोक्य द्वन्द्वयुद्धेन तस्याजेयत्वं निरधारयत्। ततश्च तन्मुखोद्भूतं मद्यगन्धमाघ्राय तेन च तस्य मद्यपत्वमवबुध्य कपटप्रपञ्चेन तं वञ्चयितुमैच्छत्। स्मयमानेव च मन्दिरे प्रविश्य मद्यभाण्डात् पानपात्रे मद्यं प्रपूर्य तस्मै प्रायच्छत्। तस्याः सुन्दर्याः करेण मदिरामुपलभ्याऽऽत्मानं धन्यं मन्यमानः स कामुकः झटिति तामपात्। एवं तद्दत्तं मद्यमितस्ततः प्रक्षिपन्ती स्वदत्तं च तं पाययन्ती सा बुद्धिमती बाला कतिपयैरेव क्षणैस्तममूर्च्छयत्। मूर्च्छितस्य च तस्य वक्षसिच्छुरिकां प्रावेशयत्। छुरिकाऽऽघातेन मृतं च तं केनचिद्वस्त्रेण प्रावृत्य वातायनद्वारा राजमार्गे न्यपातयत्। स्वयं च घण्टापथोपरिष्ठं वातायनं विहायान्यानि सर्वाणि तन्मन्दिरस्थानि द्वाराणि समुद्रय तत्रैवोपाविशत्। मृतस्य तस्य खड्गं च स्वसमीपेऽस्थापयत्।

अत्र च राजमार्गे परिभ्राम्यन् कश्चिद्रक्षापुरुषस्तत्र प्रदेशे समागतस्तां वस्त्रग्रन्थिमुपलभ्यानुद्घाटितामेव तां कोटपालस्य समीपेऽनयत्। तस्या जामोतीवेश्याया मन्दिरस्याधस्तात् प्राप्तिं चाकथयत्। उद्घाटितायां तस्यां स्वपुत्रशवं विलोक्य परमदुःखितः कोटपालस्तस्मिन्नेव क्षणे तस्या भवनमेत्य तां स्वपुत्रवार्तामपृच्छत्। तया च तस्योपरितनभवनशायित्वमवगत्य वीरमतिसमधिष्ठितस्य भवनस्य द्वारे गत्वा तदुद्घाटनाय शब्दमकरोत्। तन्मध्याच्च वीरमतिः प्राह "मत्पातिव्रत्यमपजिहीर्षवेऽस्मै मया समुचितो दण्डो दत्तः। अहमेव चामुं शवं राजमार्गेऽक्षेप्सम्"।

वीरमत्यास्तानि सदीपनान्यक्षराण्याकर्ण्य पादाहतो भुजङ्ग इव निश्वसन् स कोटपालः स्वभटानादिदेश "गच्छत वातायनद्वारा-

ऽस्मिन् मन्दिरे प्रविशत । इमां च पतिव्रतामानिनीं केशग्राहं गृहीत्वाऽऽनयत" । स्वामिसमादिष्टा सेवकाश्च मन्दिरमारोढुमयतन्त । तानारोहतो विलोक्य भ्रुकुटिविभूषितललाटतटा, शोणीभवन्नेत्रपङ्कजा, स्वेदकणसमलङ्कृतवदनसरोरुहा, वेपमानाधरा, शुष्यदास्या, सा वीरमतिः रोमकंटकाङ्किता सती महिषमर्दनं कर्तुमिच्छन्त्याः कालिकाया इव रूपमास्थाय वातायनपार्श्वे ऽतिष्ठत्।

तत्र च समारोहत पुरुषस्य शिरः प्रवेश प्रतीक्षमाणा बाहुभ्यां दृढं गृहीत्वा खड्गमुन्निनाय । आरोढुर्मूर्ध्नि वातायने प्रविष्ट एव च सा वीरबालाखड्गेन तथा प्राहरद् यथा छिन्नो मूर्धा मन्दिरे कायश्चाधस्तात् पथि पपात। एवं शिरोघातं घ्नती सा बाला सद्धर्मबलोद्भूतमिव बलमवाप्य कतिपयैरेव क्षणैर्विंशतिं पञ्चविंशतिं वा पुरुषान् जघान । ततश्च हस्तौ पादौ चास्फालयतामध पतितानां कायानां शोणितैः शोणितां तां भुवं विलोक्य तस्य घोरतरस्य कर्मणः साक्षिणां सर्वेषां शिरांसि भ्रान्तानि, नेत्राणि निमीलितानि, हृदयानि वेपितानि मनांसि च विस्मितान्यभवन्। विषविसर्पं विसर्पन्ती च सा वार्ता क्षणादेव सर्वस्मिन्नपि तस्मिन् पाटनपुरे प्रासरत्। सिद्धराजोऽपि च तां शुश्राव। श्रुत्वैव च वीरमत्या वीरतया संतुष्टो विस्मितश्च स कोटपालस्य समीपेऽमुं संदेशं प्राहिणोत् "यावदहं तत्र नागच्छामि तावन्न किञ्चिदपि वक्तव्यं तस्यै" । वीरमत्यास्तेन हत्याकाण्डेन सजातवेपथुः कोटपालस्तु ध्वस्तधैर्योऽपि तयाऽऽज्ञया पुन प्रतिबद्धो नात पर किञ्चिदपि कर्तुमशकत्। वीरमतिरपि च मूर्तिमती वीरतेव तथैव तत्र तस्थौ। इदानीमय वीरमतिवृत्तान्तोऽत्रैव तिष्ठतु। अग्रतोऽग्रत एव वर्णयिष्यामः। तस्याः पत्युर्जगद्देवस्य वृत्तान्तावगमाय च स्यात् कुतूहलम्, तदेव प्रथमं वर्णयामः।

जगदेव सहस्रलिङ्गसरस्तटान्नगरमगच्छत्। आत्मनिर्वाहयोग्य किञ्चित्स्थानं वासवेतनेन स्वयत्त कृत्वा स्वपत्नीं तत्र नेतुकामः पुनस्तत्रैव सरस्तटे प्रयातः परं तत्र तां नालभत। केवलं तत्र रथनेमिलेखां पुरुषाणामश्वानां च चरणचिह्नान्यपश्यत्। ततश्च "केनचिच्छलिता मे मुग्धा वधूः" इति विचार्य तैः पदचिह्नैस्तस्यास्तस्मिन्नेव नगरे प्रवेशमवधार्य परमदुःखितः पुनर्नगरं ययौ । तत्र च सिद्धराजमुपस्थातुकामः [redacted] सहसैव स्वस्य तत्सभाप्रवेशं दुष्करमिव मत्वा कांश्चित्तदध्यक्षानुपातिष्ठत्। तेषामन्यतमेन केनचित् वृत्त्या नियोज्य

स स्वसेवायां गृहीतोऽसि। परं इन्मर्मव्रणइव स वीरमतिवियोगस्तम-पीडयत्। तत्रैव च "काचित्कुलवधूः स्वपातिव्रत्यपालनाय महान्त जनसंक्षय कृतवती" इति शुश्राव। अत्रैव च तादृश साहस स्वपत्न्या-मेव समाकर "अपि मा स्यान्मे प्रेयसी, अप्यह तां तत्र द्रक्ष्यामि, अप्यनुकूला मे भाग्यदेवता, अपि पुनरप्यपहृतपत्नीकस्य मे विफल जीवन सफल स्यात्" इत्येवमादीन् नानाविधान् विकल्पान् विकल्प-यन् स द्रुततर तत्र शोणितसिक्तभूतले स्थले ययौ।

यावज्जगद्देवस्तत्र प्राप्तस्तावत् पाटनाधिपति सिद्धराजोऽपि तत्राऽऽजगाम। तस्या वेश्याया स्थाने, यस्मिन् भवने वीरमतिरभव-त्तस्य द्वारदेशमासाद्य सिद्धराजः प्राह "अयि चावडाकुलभूषणे राजकुमारि! त्वादृश्याः पतिव्रतायाः समागमनान्ममेद पुर पवित्र जातम्। अह तव विक्रमेणात्यन्त संतुष्टोऽस्मि। अहमनुष्य नगरस्य राजा सिद्धराजोऽस्मि। अद्यारभ्याह त्वयि स्वसुतायामिव व्यवहरि-ष्यामि। सम्प्रति ते भयं नास्ति। तद् ब्रूहि त्व कुतः कस्मात्कदा चागताऽसि? कानि च धन्यान्यक्षराणि ते नामालङ्कुर्वन्तीति" तदाकर्ण्य भवनाभ्यन्तरवर्तिनी वीरमतिः प्राह "देव! अह राजजी-नाम्नष्टुकटोडाऽधिपते पुत्री राजकुमारस्यवीरजस्य च स्वसाऽस्मि प्रमारकुलदीपकस्य धारानगरनायकस्योदयादित्यस्य कनिष्ठपुत्रस्य भार्याऽस्मि। मम स्वामीभृत्यर्थमत्र समायातस्तेनैव च सह ममाप्या-गमन जातम्। माम् सहस्रलिङ्गतटे विमुच्य मम स्वामी वासगृहान्वे-षणाय पुरे ययौ। अत्रान्तरे चेय गणिका जानाती मत्समीपे गत्वाऽऽ-त्मानं राजमहिषीं व्याचख्यौ। विविधैश्च प्रकारैः प्रत्यय जनयित्वा मामत्रानिनाय। रात्रौ च मम व्रतस्य भङ्ग कर्तुं कोटपालपुत्र प्राहिणोत्। स च मया स्वधर्मरक्षार्थं हत, इदानीं यावदत्र मम पतिर्नागच्छेत् तावदह कथमपि भवनाद् बहिर्नागमिष्यामि, अथ चेत् कश्चिन्मामितो बलान्निस्सारयिष्यति तर्हि तेन सह युद्ध्यमानाहमत्रैव प्राणान् त्यक्ष्या-मि। एतदाकर्ण्य प्रथमत एव तत्रोपस्थितो जगद्देवो राज्ञः सिद्धराज-स्याग्रतो भूत्वा त प्राणमत्, स्वपत्नीं चावोचत "चावडि! अहमत्रैव तिष्ठामि। सम्प्रति त्व बहिरेहि। चेदपार्श्चित्वया त्वया महद्दुःख-मनुभूतम्। परमिदानीं काचिद् भयसम्भावना नास्ति" इति। तन्निश-म्य "इयमागच्छामि" इत्यभिधाय सा सत्वरमेव बहिरागता। तावु-भावपि दम्पती तत्रान्योन्य निरीक्ष्य बाष्पपूरप्लुतलोचनौ क्षण सिद्ध-

राजस्य पुरतस्तस्थतुः। तौ विलोक्य सुप्रसन्नमना सिद्धराजस्तयोः स्थानभोजनादिप्रबन्धाय स्वसेवकानादिश्य तं कोटपालं प्राह "त्वमस्य नगरस्य रक्षार्थं विनियुक्तोऽसि, त्वं च स्वकर्तव्यात् प्रमाद्यसीत्येव न, किन्तु स्वपुत्रं दुर्वृत्तं विधाय तद्द्वारा कुलवधूनां धर्मं ध्वंसयसीत्युचित एव तव प्रमादिनः पुत्रवधः" एवमभिधाय तस्य प्रहृस्थितं द्रव्यमपहृत्य तं स्वसीम्नो बहिश्चकार। दासीसहितायास्तस्या गणिकाया नासिकां कर्णौ च कर्तयित्वा तामपि तथैव निरगमयत्।

एवं यथोचितं दण्डविधानं कृत्वा स्वप्रासादं प्रतिनिवृत्तः सिद्धराजो जगद्देवमाहूय तं वासःप्रभृतिभिर्बहुभिर्वस्तुभिः प्रसादयामास। तस्मै महत् पदं प्रदाय तं स्वसामन्तेषु नियुयुजे। सोऽयं वीरमत्या एव धर्मस्य पराक्रमस्य प्रभावोऽस्ति यदचिरादेव जगद्देवस्तादृशमुच्चपदमवाप। पृथ्वयस्तु तेनापि स्वसेवाभिः सिद्धराजस्तथा परितोषितो यत्क्रमशस्तस्याधिकारं वर्धयन् स स्वल्पैरेव दिनैस्तं स्वसामन्तेषु सर्वोत्कृष्टे पदे नियुयुजे। आगन्तुकं तं तादृशे महति पदे विलोक्य सर्वे सामन्तास्तस्मै महतीमसूयामकुर्वन्। तादृशीं स्थितिं दृष्ट्वा तस्य तत्पदयोग्यतां साधयितुमिच्छुः सिद्धराजः कतिपयदिनान्यवसरं प्रतीक्षमाणोऽतिष्ठत्, एकदा कृष्णपक्षस्य तमिस्रायां प्रासादपृष्ठमधिष्ठितः स क्षणे क्षणे कासाचित् स्त्रीणां क्रन्दनस्य हसनस्य च शब्दं शुश्राव। श्रुत्वा तदनुसरणाय वास्तविकेतिवृत्तज्ञानाय च सर्वान् सामन्तानादिदेश। तेषु स्वकार्यार्थं प्रस्थितेषु स स्वयमपि सुनिभृतंताननुससार। नगराद् दूरं गत्वा स केवलं जगद्देवमेव यान्तमपश्यदन्यांस्तु न काँश्चिदपि। जगद्देवस्तु यस्मादिग्देशात्स ध्वनिरायात् तमेव देशं गत्वा श्मशाने सम्प्राप्त। तत्र च काश्चिद् हसन्तीः रुदतीश्च स्त्रीर्दृष्ट्वा तासां रोदनस्य हसनस्य च कारणमपृच्छत्। तत्र रुदत्य स्त्रिय एवं प्रत्यूचुः "वयममुष्य पाटननगरस्य देवताः स्मः। श्वो दशवादनसमये राज्ञः सिद्धराजस्य मृत्युर्भविता। तेन चास्माकं हानिः स्यात्। ततो वयं रुदिमः।" ततो हसन्त्यः स्त्रिय ऊचुः। "वयं देहल्या देवता स्म। अश्च वयमेतादृशं सर्वविधस्वामिगुणोपेतं राजानं लप्स्यामहे इत्यस्ति नः परमः प्रमोदः" तदाकर्ण्यात्यन्तं विषण्णो जगद्देवस्ता इत्थमनुयुयुक्तवान्। "किं कश्चिद् राज्ञो वयोवृद्धेरप्युपायोऽस्ति। तदुत्तरे "तादृशस्यैव कस्यचिद्वीरस्य शिरोबलिना पुनस्तस्यायुर्द्वादशवर्षाणि वर्धेतेति" समूचुः। स्वशिरोदा-

नाय समुद्युक्तो जगद्देवः सकृत् स्वप्रिया मुखमवलोकयितुं ता आपृच्छ्य स्वगृहं ययौ।

तत्र च स्ववधूं प्रबोध्य सर्वं वृत्तान्तं व्यजिज्ञपत्। सा तु तदाकर्ण्य "यद्ययं सन्निहितोपाय काय कस्मैचित् सत्कार्यायोपयुक्तो भवेत् तर्हि नात परोऽपरो लाभः। तदानीमुभावपि स्वशिरसोर्वली दास्यावः"। एवमाकर्ण्य "त्वयि मृताया बालकयोर्जीवनोपाय कः स्यात्" इत्युक्तवति जगद्देवे सा पुनराह "यथैकस्य बलिदानाद्द्वादशवर्षाण्यायुर्वर्धते तथैव यदि चतुर्णां बलिदानादष्टचत्वारिंशद्वर्षाणि वर्धेत तर्हि प्रष्टव्यास्ता देव्यः" इति। तदा जगद्देव श्मशानं गत्वा ता देवीस्तस्मिन् विषयेऽपृच्छत्। ताश्चाष्टाचत्वारिंशद्वर्षाण्यायुषो वर्धनमन्वमन्यन्त। ततः स स्वगृहं प्रतिनिवृत्त्य पुत्रौ पत्नीं च नीत्वा पुनः श्मशाने गत। तत्र च ज्येष्ठपुत्रस्य शिरश्छेदनाय जगद्देवेन खड्गे उन्नीते देव्य प्राहुः "अलमलमेतावता साहसेन। तव सत्त्व वीर्यं स्वामिभक्तिश्च परीक्षिता"।

अथ द्वितीये दिने तस्य सर्वस्य वृत्तान्तस्य साक्षाद् द्रष्टा सिद्धराजः सर्वान् सामन्तान् तं वृत्तान्तमपृच्छत्। तेषा च कृत्रिमाणि भिन्नभिन्नान्युत्तराण्याकर्ण्य स स्वयम् तं सर्वं वृत्तान्तं निगद्य तेषा सर्वेषां मिथ्यावादित्वं जगद्देवस्य च महोच्चपदयोग्यत्वमाचख्यौ। ततः प्रभृति जगद्देवो राज्ञ सिद्धराजस्य महतीं कृपामुपलभ्य बहूनि वर्षाणि तत्र ससुखं तस्थौ। पुन कदाचित्सिद्धराजमापृच्छ्य स्वपितरौ द्रष्टुं स्वाश्रयं धारानगरं सपुत्रदारो निववृते। तत्र च स्वविमातुर्बघेलन्या महान्तं प्रसादममन्यत। यतो यदि सा तं तथा न निरवासयिष्यत् तर्हि स तां महतीं श्रियं कदापि नालप्स्यत।



# मलेथा ग्रामः

महामहोपाध्याय पं० परमेश्वरानन्दशास्त्री

( राष्ट्रपतिसम्मानित, प्रधानाचार्य, अखिलभारतीयसंस्कृतविद्यापीठम्, देहली )

अस्ति गढवालप्रान्ते मलेथा नाम कश्चिद् ग्रामः, यम् अनेके राजपुत्र-वीरा स्वजन्मनालञ्चक्रुः। तेषु वीरेषु माधवसिंहो नायकायते, यस्य यशांस्यद्यापि सुमधुरमेवं गीयन्ते—

एक सिंहो वन गाहते, मृगसमुदायं भक्षति,
अपरः सिंहस्तनयं दत्त्वा ग्रामजनान् परिरक्षति।
कोऽसौ सिंहो माधवसिंह स हि दुर्भिक्ष क्षति
श्रम-महिमान स्थापयति लोके सदा सुभिक्षं धुक्षति[1]

इति।

अथैकदा माधवसिंहस्य भ्रातृजाया सोल्लुण्ठं तमुवाच—'धिगिमं ते ग्रामम्, यत्र पातुं पर्याप्तं पानीयमपि नास्ति, दूरे तूदरपूर्तिक्षमं सदन्नम्, नास्त्यत्र तादृशं वनमपि यत्रेन्धनं घासश्च सुलभं स्यात्। यवसाभावे कुत पशवः, दूरे तु पयसां कथा, ग्रामान्तरेषु वधूजनं सुखिनं शृणोमि, अयं च ग्रामो वीराणां जन्मभूरपि नरकायते', इति। प्रजावत्या मुखात् स्वग्रामस्य वीरप्रसूत्वं श्रुत्वा माधवसिंहो वीरशिरोमणेर्गढवालराज्यसेनापतेः स्वपितुः सस्मार। माधवसिंहस्य जनको भाण्डारिकुले प्रसूत स्वप्रान्ते 'कालोभण्डारि' इति नाम्ना प्रथते स्म। तदवदानगाथा गढवालसीमानमतिलङ्घ्य तदुपान्तवर्तिषु सिरमोरादिराज्येष्वपि प्रसिध्यन्ति स्म। 'कालोभण्डारि' युद्धेषु नैकशः शत्रून् पराजिग्ये। तच्छौर्यकीर्तय क्रमशस्तदानीन्तनदिल्लीश्वरकर्णामप्यस्पृशन्।

एकदा मुमूर्षुणा तेन स्वपुत्रं प्रति बोधितम्—"वत्स माधव! सिरमौरराज्याधिपतिर्मूलचन्द्रः चम्पावत्या अधिपतिर्ज्ञानचन्द्रश्च

---

1. दीपयति, वर्धयतीति यावत्।

मिलित्वा दिल्लीपतिं सम्राजमकबरं प्रलोभयाञ्चक्रतुः—उत्तरापथे द्रोणाश्रमस्य (देहरादूनस्य) तपोवननाम्नि भूभागे एकमेतादृशं सुरभि स्वादुतमं च धान्य (धान) मुत्पद्यते यदेकेनैव सन्नाहेन परिपच्यते। मूलचन्द्र-ज्ञानचन्द्रावपि तद् भूभागं प्रति लोलुपौ स्तः। दिल्लीपतिसाहाय्येन तत्र तयोराक्रमणं संभाव्यते। अत इदमत्यन्तमपेक्षितं यद्गढ़वालराज्ये तादृशं किमपि स्थानमन्वेष्टव्यं निर्मातव्यं वा यत्र तादृशं ततोऽप्युत्तमं वा धान्यं भूय परिमाणं समुत्पादयितुं शक्येत"

अथ 'कालोभण्डारिः' अचिरात् स्व प्रयाणमकरोत्। पितरि प्रमीते माधवसिंहो गढ़वालराज्यस्य सेनापतिपदं प्राप्नोत्। शूराणामग्रणीभियामभूमिरसौ वीरो नीतिद्रोणीमार्गेण तिब्बतं विजिग्ये। तेन तदानीं राज्यसीमाया महान् विस्तारः कृतः। तत्र तत्र सीमाचिह्नान्यपि स्थापितानि। उच्चेषु पर्वतशृङ्गेषु च बृहन्ति दुर्गाणि निर्मापितानि। तत्रान्नैव शत्रवो ग्रीष्मेऽपि हैमनं कम्पनमन्वभवन्। गढ़देशाधिपतिरपि स्वचमूपतेस्तस्य पराक्रमातिशयेन प्रसन्नस्तं दानमानाभ्यां बहु सत्कार। स तस्मै माणकनाथशिखरं मौंगराप्रदेशस्योर्वराणि क्षेत्राणि च प्रददौ।

माधवसिंहः प्रजावत्या प्रतिपादितानां स्वजन्मभूमिदोषाणां नाद्यापि विस्मरति स्म। मृत्योः प्रागुक्तानि स्वपितुर्वचांस्यपि तस्य स्मृतेर्नापेतान्यभूवन्। देहरादूनवसुन्धरां प्रतिगृह्णवः शत्रवः कदाचिदपि तत्राभिषेणयेयुरिति विचार्य स श्रेष्ठतण्डुलाद्यव्रीहिक्षेपिक्षमान् जलबहुलान् भूभागान् अन्वेष्टुं सकलं गढ़वालराज्यं परिबभ्राम। एकदा स स्वग्रामस्य अधित्यकायां शिखरमारुह्य चतसृषु दिक्षु दृष्टिं निचिक्षेप। ग्रामं यामेनैका लघुर्गिरिनदी वहति, याग्रे गत्वा गङ्गामुपतिष्ठते। नदीग्रामयोर्मध्ये एको लघुतमः पर्वतो वर्तते—स तदानीमात्मानं प्रति प्रश्नमेकमकरोत्—अपिशक्यमस्याः सरितो जलं मलेया ग्राममानेतुम्? एवं विचारयतस्तस्य दृष्टिरेकस्याखोरुपरि पतिता, यः पर्वते बिलं खनति स्म। स एवं मनस्यकरोत्-यद्येष लघुकायो जीव एकाकी पर्वतं खनित्वा स्वावासं परिकल्पयितुं प्रयतते, तर्हि शरीरेण महान् मानवस्तदृशां स्वग्रामवासिनां साहाय्येन शैलेऽस्मिन् बृहद् विवरं विधाय तेन पथा सरितोऽस्याः—सलिलं स्वग्राममानेतुं किं न प्रयतेत? स निरचिनोद् ग्रामसमृद्ध्ये कुल्यानिर्माणम्। स्वयोजनामनुचिन्त्य तत्प्रपूर्तौ भविष्यन्तीं स्वग्रामसमृद्धिं चानुमाय माधवसिंहो हर्षेणोत्फु-

ल्लवदनो बभूव। यदर्थं स इयदभ्रमत् स प्रयोगस्तस्यैव ग्रामे विधास्यते इति मन्ये स न जानाति स्म।

अथ–चमूपतिर्माधवसिंह सर्वान् ग्रामवृद्धान् एकत्र सगमय्य तदग्रे स्वयोजनामुपस्थापयति स्म। पर तां श्रुत्वा सर्वेऽपि तमुच्चैर्जहसु, तच विकृतमस्तिष्कम् अविदु। तन्मतेन पर्वत विवृत्य सरित्सलिलस्य ग्रामानयनप्रयासो व्योमतलात् तारानयनप्रयास इवाभूत। सेनापतिर्ग्रामवृद्धाना प्रत्याय मूषकदृष्टान्तमुपन्यसति स्म। पर न सोऽपि तेष प्रत्ययाय प्राभवत्। ते प्रोचु—आखव प्रकृतिदान्तया शक्त्याऽनुगृहीतास्तथा कुर्वन्ति, त्व तु तादृशो न भवसि, इति। न ते माधवसिंहस्य योजनामन्वमोदन्त, बालचापलमिव तदखिलममन्यन्त। न च तत्र तत्सहकार कर्तुमकामयन्त।

ग्रामवासिनाम् असहयोगो वीर दृढसकल्प सेनापतिं न मनागपि स्वनिश्चयाद् अच्यावयत्। स केवल स्वपरिवारमादाय स्वसकल्पसिद्धये प्रववृते। इममर्थं सूचयन्ति तद्यशोगीतान्यद्यापि गढवालग्रामे प्रतिग्राम सामाजिकोत्सवेषु सस्वर सानन्दमुद्गीयन्ते, तेष्वेकमिहोदाहराम'—

माधव आनेष्यति जलकुल्याम्,
मलेथा द्रक्ष्यति घृतकुल्याम्।
विविधै सस्यै स्वादुशालिभि कन्दमूलफलजालै
हरितां प्रचितां ग्राममुत्र नो जनयन्तीं स्वस्तुल्याम्।
माधव आनेष्यति जलकुल्याम्,
मलेथा द्रक्ष्यति घृतकुल्याम्।

अथ सेनानायक माधवसिंह सपरिवार गिरिखननकर्मणि व्यापृत दृष्ट्वासर्वेऽपि ग्रामवासिनो बाला युवानो वृद्धाश्चानाहूता अपि, प्रकाशितचरात्कचयोऽपि कयाप्यदृश्यया शक्त्या प्रेरिता खनकसेनाभटा इव कुठारम, खनित्रम्, लवित्रम्, कुटलिकाम्, महाघनम्, कुद्दालम्, आखानम् यत्किंच्युपकरण महल्लघु वा येन यल्लब्ध तदादाय शैलविवर निर्माणे तस्य (माधवसिंहस्य) सहाया अभवन्। वृक्षा अवृश्च्यन्त, पाषाण व्यदश्यन्त, शिखराच्छिला व्यलोठ्यन्त, सर्वत्र गड्गडायित गड्गडायित चाश्रूयत। विपत्सागरमथनेन सम्पदमृत कामयमाना मलेथाग्रामवासिन्या जनास्तदानीं पुरा रत्नाकरमथनेनामृतामि-

च्छतः सुरानप्यतिशेरते स्म। तदानीं च ग्रामवन्दिभि. (चारणैः) डमरुरुम्, कांस्य स्थालकम्, पटहं च नादयद्भिरुत्साहवर्धनानि पराक्रम-प्ररोचकानि शौर्यगीतान्यगीयन्त। इत्यमष्टौ मासान् रात्रिन्दिव श्राम्यद्भिर्मलेथावासिभिः पादोनं स्वलक्ष्यमभिपूरितम्। अथैकदा श्रमदाने प्रवर्तमाने दुर्दैववशात् चमूपतेर्माधवसिंहस्यैकमात्र आत्मजो गिरिशिखराल्लुठतो गण्डशैलस्याधस्तात् आयातः पिपिषे, प्राणाँश्च जहौ, लोका विषादाश्रूणि व्यमुञ्चन्, समस्तो ग्रामः शोकसागरे निममज्ज। समीपवर्तिग्रामवासिनोऽपि हा हन्त, माङ्गलिके कर्मणि किमिदममङ्गल मजनि', इति सगद्‌गद ब्रुवाणा इमां दुर्घटनां मलेथाभ्युदये महान्तमन्तराय मेनिरे। परं धीरः साहसी च माधवो विपदानया न मात्रयापि विचचाल। सहि स्वसहकारिणो ग्रामवासिन इत्थं समबूबुधत्—

'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्'

'तद् भ्रातरः! अलं विषादेन। तदिदमस्मत् कर्तव्यनिष्ठाया. परीक्षणमुपतिष्ठते, अत्र प्रथम श्रेण्यां साफल्यमुपलभ्यैवास्माकं जीवन सफलम्। तदिदं गिरिखननकर्म प्रारब्धमाफलोदयं निरन्तरं प्रवर्तताम्। कर्तव्यनिष्ठानां हर्षविषादावुपेक्षणीयावेव' इति। इत्थं तद्‌बोधिता ग्रामवासिनः पुनरपि कर्मणि सोत्साहं व्यापप्रिरे। एवं च मध्ये किञ्चिदिव विहतं कुल्यानिर्माणकर्म पूर्वतोऽप्यधिकवेगेन प्राचरत्।

अथ कतिभिश्चिन्मासैः कुल्यानिर्माणकर्म सम्पन्नम्। मलेथा वासिन स्वभूमौ जलधारां दृष्ट्वा हर्षवर्षमिवानुभवन्त. कमप्यलौकिकं सुखमन्वभूवन्। तथाहि—यत्र दुर्भिक्षराक्षसः सदैव भीषणं ताण्डवनृत्यमनृत्यत्, यत्रत्यान् जनान् बुभुक्षा-महामारी क्षणमपि नात्यजत्, अद्य तत्र स्थास्नु सुभिक्षं राजति। तत्रत्याः केदारा अद्य किं किं न प्रसुवते। गोधूमाः, शालयः, माषा, मुद्‌गाः, मसूरा, शिम्बिका, मकायः, राजिका, सर्षपाः, तिलाः, पालङ्की, मेथि, अलाबु, भिण्डा, वृन्ताका, रक्तवृन्ताकाः[1], कोशातकी, मूलकम्, घोषक[2], पलाण्डु, रसोनः, जीरक, धान्याकम्[3] इत्यादि सर्वं तत्रेदानीं भूयसा समुत्पद्यते। कुल्यातटे स्थाने

१. टमाटर।
२. रामतुराई।
३. धनिया।

स्थाने पेपण्य-[1] स्थापिता सन्ति, या जलेन चलन्ति; याभिर्गोधूमादिकं पिष्ट्वा पिष्टं निर्मीयते। संप्रति तत्र गोचरभूमिरप्यस्ति, यत्र गोमहिष्यादयो ग्राम्यपशवः स्वच्छन्दं चरन्ति। अद्य नास्ति कोऽप्येतादृशो मलेथावास्तव्यः यस्य गावो महिष्योऽजा अवयो वा न सन्ति। यत्र दुग्धबिन्दुरपि दुर्लभोऽभवत्, सांप्रतं तत्र दुग्धेनैवाभ्यागतानाम् आतिथ्यं क्रियते। समीप एव ग्रामवासिनां कृते सुरक्षितमेकं वनमप्यस्ति, यत इन्धनं दारु वा संगृह्यते। सोऽयं दृढस्य संकल्पस्य, आत्मविश्वासस्य, श्रमस्य च महिमा यदद्य मलेथाग्रामः सर्वथा सुखी ग्रामः कथ्यते। तत् साधूक्तं केनचिदनुभविना कविना—

> संकल्पः सुदृढो यस्य यस्य विश्वास आत्मनि।
> व्यसनेऽप्यचलो यस्य श्रमस्तं वृणुते श्रियः॥



१. पवित्तं।

# प्रथमश्रेणी

श्री रामकुबेरमालवीय

( साहित्यविभागाध्यक्ष वाराणसेयसंस्कृतविश्वविद्यालय वाराणसी )

अस्मिन्वर्षे किं तव अन्तिमा परीक्षा ?
आ भवादृशां सज्जनानां कृपया अन्तिम एव वर्षेऽस्मि" इति कथयन्राजेन्द्रः किञ्चिन्नम्रीभूतमुखमण्डलो जातः ।

'किं करोमि भ्रातः! वयं सर्वं तु स्वास्थ्यमिनाशं कृतवन्त एव । गार्हस्थ्यविषमपरिस्थितिपराधीना जाता । परं भवन्तस्सर्वे तु उचितमार्ग एव स्थिताः । अयमेव सन्तोषस्य विषयो यत् सहपाठिनः अग्रे वर्धमानास्सन्ति । अन्ततः इदं तु वक्तुं शक्यत एव यन्मदीये ग्रामे साम्प्रतम् एम ए परीक्षोत्तीर्णानां जनानां न्यूनता नास्ति । भवद्विषये न केवलं तावदेतद्ग्रामनिवासिनां किन्तु अन्येषामपि समीपस्थग्रामनिवासिनां पर्याप्त आशासञ्चारः' ।

मिडिलकक्षासहपाठिनो दीनानाथस्य मुखात्सूक्तामित्थंभूतां वाणीं निशम्य स स्मयमान आसीत् । सम्भवति, अष्टमकक्षायां पठनसमयेऽस्य प्रियसुहृदो हृदये निरुद्धा या अन्या अतिद्वेषत्वादिभावना अनुभूतपूर्वा तत्स्मरणोदयस्सञ्जात इति ।

'भवादृशां महात्मनामाशीर्वाद एवापेक्ष्यते भ्रातः! 'इति वाक्यं वदन्नद्धाञ्जलिर्यदासीच्चलन्नासीत् तदैनमन्य पुनरवोचत्—

'किं नु भवान्प्रतिवर्षं प्रथमश्रेणीमेव लभते ? वरम् , पुनरस्मिन्नपि वर्षे तथैव ध्यानं देयमेव भ्रातः!' प्रथमवाक्ये अविश्वासभावना द्वितीयवाक्ये सावधानतासम्पादनम् । राजेन्द्र एवमेव चिन्तयन्विश्वासभावनाभावितस्मितवदनारविन्दो गृहम्प्रति अग्रेसरो बभूव ।

दुर्गापूजावकाशानन्तरं राजेन्द्रः ग्रामात्प्रतिनिवृत्य वस्तुतः स्वध्येयप्राप्तये दृढसंकल्पो जातः । एवमेव तत्सहाध्यायिनोऽपि । अध्यापका अपि स्खलनाभावाय सावधानतां स्मारयन्ति ।

शरदृतुस्समाजगाम । समयं नानावर्णैः पक्षैरुड्डीयमानः पलायत इव । सत्यमेव कार्यव्यस्ततादशायां कालो द्रुतगत्या धावतीव ।

स स्वनिबन्धं प्रदर्शितवान् । प्रध्यापकस्तं निबन्धमादर्शरूपमकथयत् । केनचित्सहपाठिना कृते प्रार्थने तेन स निबन्धस्तस्मै प्रदत्तः । 'न जाने कुत्र गत,' इति कथयित्वा तस्य सहपाठिना स निबन्धः न परावर्तितः ।

सहपाठिना प्रबल सघर्ष प्रचलति । पुस्तकालयस्य उपयोगीनि पुस्तकानि अज्ञातस्थानेषु सरक्षितानि क्रियन्ते यतोऽन्यो न पठेत्, एतदन्तरे कदाचित्कश्चिदस्थयति—'मित्र ! यः प्रथमश्रेणीं प्राप्स्यति स तु सर्वेजानन्त्येव, अन्ये त दृष्ट्वा मधुर साकूत स्मितं कुर्वणाः प्रयान्ति ।

कानिचित्पत्राणि गृहात् यानिचिन्मित्राणामपि तत्समीपमागच्छन्ति । तेषु 'स्वास्थ्य सरक्षन्नध्ययनम्प्रति दृढतया पुरस्सरो भव' इत्यादिरीत्या प्रोत्साहनप्रकाराणां बाहुल्य दृश्यते ।

एपेन लिखितम्, प्रथमश्रेणी प्राप्तव्या भ्रात', यदा मूर्धन्यस्थानप्राप्तेर्योग' क्रियते तदा कथचित्प्रथमा श्रेणी समायाति ।

अस्तु, एवमेव विविधेषु प्रबलप्रोत्साहनाडम्बरेषु चलत्सु परीक्षा समागतैव । प्रश्नपत्राण्यपि सुबोधानि समागच्छन्ति । राजेन्द्रस्य तथाऽन्य सुन्दाणमपि सतोष एव

अस्मिन्नेव वर्षे पथ्या द्विरागमनेन राजेन्द्रस्य काचिद्विषमा विचित्रा च परिस्थितिरुत्पन्ना । सर्वेऽस्मत्पक्षयस्तं नानाविधान्युपालम्भवचनानि प्रयुञ्जन्ते । माहनेन प्रोक्तम्—"भ्रात ! पश्य कदाचिदुभयलाभ्यरे मालिन्यरेखा न प्रादुर्भवेत्" ।

यत्र यत्र राजेन्द्र सर्वत्र ददर्श चैतन्योल्लासकर वातावरणम्, तेन सहैव स्वाभिमान सन्मान प्रतिष्ठा प्रथमश्रेण्यामेवागमनस्य आवरणमाम । सोऽनुचिन्तति पश्यामि किं भवति ।

तस्मिन्नेव दिने वार्तालापप्रसङ्गे केनचित्प्रश्नमा युक्तता सविविश्वास पूर्वक प्रोक्तम्—'भवतु नाम, भ्रात, यदि भवन प्रथमश्रेण्यां नागमिष्यति तर्हि कस्यागमिष्यति, कथ न स्यात् । अन्तर्यो मन्तव्यमेव यत्परिश्रमोऽप्यत्र किंचिदपूर्वं वस्तु । तत्र श्रुत्वा राजेन्द्रस्य मुखात्सहसा सहसारादेव निःसृतम् 'सभाग्यते भा पाण्ड्य' समापि काचिदाशा अस्त्येव, प्रश्नपत्राण्यपि अन्यवर्षापेक्षयाऽपि वर्षे सुकराणि चासन् । एवं कथयत एव मम हृदय न जाने, कथ वेपते स्म, कस्यचिद्पराधिनो हृदयमिव च पद्मत्वमभवत् । मन्ये तेन विचारितम्—

'कथमेवमपि किं स्वश्लाघापरं वचः स्वमुखान्निस्सारणीयम्, भो मूर्ख'।

तस्य समीपमेव स्थित एको बालकः स्वगृहं गत्वा वार्त्तालापप्रसङ्गे जगाद, पितृव्यस्तु अवोचत् 'अहं प्रथमश्रेण्यामुत्तीर्णो भविष्यामि'। इयं वार्त्ता शनैः शनैर्जले तैलबिन्दुरिव सर्वतः प्रससार। कश्चिदाह 'अहङ्कारो जातः अस्य डिम्भावस्थस्य बालकस्य,' कोऽप्यकथयत्, 'अहङ्कारिणां शिरो नीचैर्भवत्येव'। कश्चित्तत्पक्षमवलम्ब्य आक्षेप निराकरणं करोति। 'किं भवान्भोजनं कुर्वन्निदं न ज्ञास्यति यत् कानि वस्तूनि कियन्ति चाहं भक्षयामि एषामुदरे सम्यक्परिपाकः स्यान्नवेति। इत्यादीनि वाक्यानि श्रुत्वा तेन कर्णौ पिहितौ। आः कियती घृणिता निन्दनीया चेयं वार्त्ता।

ग्रामे बहवः पुरुषाः कार्यरहिता भवन्ति येषां कर्तव्यमितस्ततस्समाचारप्रख्यापनम्। तत्रापि स्त्रियस्तु अतिनिपुणाः। कयाचिद् भ्रातृजायया कथितम्—भो गृहस्य प्रथमश्रेण्या कार्यं न प्रचलति किं यद्बहिर्बहिः प्रथमश्रेण्या अन्वेषणे विविधं प्रयासं करोषि। श्रुत्वा स स्मयमान एवास्ति। किं कथयतु सः, यदा तेनैव पूर्वं कथितम् 'सम्भाव्यते—प्रथमा श्रेणी मम आगच्छेत्'।

अधुना प्रतिदिनं प्रायशः सर्वेषां मुखेभ्यः प्रथमश्रेण्या वार्तां श्रुत्वा एका विचित्रा भावना तस्य मनः पीडयितुं प्रवृत्ता। प्रथमश्रेण्या नाम श्रावं श्रावं साम्प्रतं स आवश्यकताधिकं तस्मिन्नेव व्याकुलीभावमागतो यथा उन्मादसदृशीमवस्थां कदाचिन्न प्राप्नुयात्, इत्थं सन्देहो जातः।

भूयोभूयश्चिन्तयति कथमहो परीक्षापरिणामस्य प्रकाशः इयदधिकसमयानन्तरं निस्सरति। शीघ्रमेव कश्चिन्निर्णयो भवेत्। इयं कियती परमासह्या स्थितिः। सम्पूर्णग्रामस्य सर्वे आबालवृद्धपुरुषास्तं दृष्ट्वा स्मितमन्तरेण न स्थातुं प्रभवन्ति। तस्मिन्दिने चञ्चलस्वभावो हरिः 'तात! प्रथमा श्रेणी' कथयन्पलायितः। स शृण्वन्पश्यन्नेव स्थितः स्तब्धः विनैव कञ्चित्प्रतीकारम्।

तस्य पत्न्या अप्युपालम्भोक्तः यद् ग्रामस्थान्याः स्त्रियोऽपि तां 'प्रथमश्रेणी' इति संबोध्याह्वयन्ति। विगतायामेव रात्रौ पत्न्या विचित्रगुप्तमुद्रया उपन्यस्तम्, 'आगच्छतु आगच्छतु प्रथमश्रेणी जी!'' यद्भवतु तद्भवतु, तथापि दृष्टानामुत्तरं प्रश्नप्रहारेण प्रदत्तमेव। "अन्ततः

किमहमपि इतरसदृशी, बाढम्, अहमस्मि प्रथमश्रेणी, भवत्य: किमर्थं मां बाधन्ते, मद्विषये यथारुचि जल्पन्तु सुन्दरमसुन्दर वा। परन्तु यदि किमपि मत्प्रियविषयकबुद्धिमारोप्य भवतीभिरुच्यते तर्हि कथ सोढु शक्यम्।" इद तु सत्यमेव यदि भवान्प्रथमश्रेणीं न प्राप्स्यति तर्हि क:प्राप्स्यति।

कालचक्रगत्यनुसार श्व एव परीक्षाफल प्रकाशित भविता। मित्राणां सर्वेषां समीपस्थनगर गन्तु योजना निर्मिता। तत्रैव सर्वे परिणाम प्रतीक्षयन्ति तत्रैव पुष्पमालाक्रयणमपि स्यात्। तदा तदातु आनन्दो भविष्यति। कश्चित्कथयति— भ्रात ! पश्य मिष्टान्नास्वादन भविष्यत्येव'। अन्यो वदति—'अरे प्रिय ! अथ किं मिष्टान्न दास्यति, अहमेव श्वो दातास्मि। प्रथम तु त्वं चल'।

अद्य रात्रेर्यापन महत्कठिनम्। स पत्नीं स्वोत्सङ्गे संस्थापयन्, न जाने कस्मात्कारणात्तामालिङ्गति, चुम्बति, कथयति मम विश्वासस्तु वर्तत एव, परन्तु दैवसयोगाद्यदि प्रथमश्रेणी नागता स्यात्तर्हि किं भविष्यति, किं भविष्यति ! किं त्वं कथयितु शक्नोषि ? इत्यादीनि तस्या मुखमुपरि उन्नाययन् जगाद। तदैव स्वप्रियाया नेत्रयोस्समुद्रमुन्नीतमिव दीपप्रकाशे दृष्टवान्। तस्मिन्नगाधे सागरे प्रतिबिम्बित दीपकज्योतिरपश्यत् ! प्रतीत यत् दीपकार्चिर्निर्वाति। अन्धकारो भविष्यति। एतस्मिन्नन्तरे सहसैव दीपकमपश्यत्, परन्तु दीपक मन्द मन्द स्वप्रकृत्यनुसार आज्वल्यमानमेवासीत्। स उत्तीर्णो न भविष्यतीति वार्ता तस्या कर्णकुहरे आपतेत् सा उत्तर ददातु, इद कथ भवितुमर्हति। राजेन्द्रेण ज्ञातम्—तत्पत्न्या हृदये आघातो जात। अतस्स मन्दमन्द तस्या अश्रूणि प्रमार्ज्य तन्निर्जगाम।

कथचिद्रजनी पर्यवसान जगाम। भगवान्भास्कर उदित:, प्रभातो जात। सूर्योदयात्प्रागेव कृषका स्व स्व पूर्वनियोजितकार्याणि सम्पादयितु दिशि दिशि प्रतस्थिरे। ससारकार्याणि यथापूर्वमारब्धानि। माता तस्य व्रतमास्थिता। इय तदैव भोजन ग्रहीष्यति यदा स परीक्षापरिणामेन सहायास्यति। सत्यनारायणव्रतस्थापि भविष्यति। राजेन्द्र स्नात्वा भुक्त्वा स्वमहचारिभिस्सह नगर गतवान्। अद्य तत् समाचारपत्र साय चतुर्वादनपर्यन्त प्राप्तमेव स्यात् यस्मिन्नस्य भाग्यनिर्णयो भविष्यति। जीवनस्य प्रश्न: यदन्यथा

सत्यमेव समाचारपत्र विलम्ब विना चतुर्वादनसमय एव यथा

समयमागतम्। दूरतः समाचारपत्रं विलोकयन्तश्छात्रास्तस्य सहचारिणस्तस्योपरि युगपदापतिताः।

बहूनां प्रायो विंशतिसंख्याकानां मनुष्याणां समक्षं समाचार पत्रं मुद्‌घाटितम्। यद्यपि हृदयं धीरं प्रबलं चासीत् तथापि कम्पनाय परवशं जातम्।

सर्वे निर्विण्णाः। राजेन्द्र स्वहृदयामीभूत अधरे स्मितागमनस्य निष्फलामेव चेष्टां करोति। इव प्रतीत यत्किञ्चित् गापानन्द्धकण्ठ जगाद—'हा हा किमिदं जातम्। प्रथमा, अथच द्वितीयाऽपि श्रेणी यद्यागता भवेन्मन्ये कुशलम्। परमियं तु तृतीया, तृतीया, राम! राम! कियद्‌दुःखं जायते यदि प्रथमश्रेण्या परिश्रमो भवति।

तत्क्षणमेव केनापि महाशयेन गहनस्य स्वकीयानुभवस्य परिचयं ददता अभिहितम्—'किं वदामि दुःखमिति, मनस्येवमायाति यत्कञ्चिज्जलाशयं गत्वा जलसमाधिं गृह्णीयाम्'।

सद्य एव राजेन्द्रो भूयो भूयश्चकम्पे—

पुष्पाणां माला यथारब्धा यथास्थिताश्च प्रक्षिप्ता बभूवुः। मिष्टान्नादिमधुरपदार्था न सेविता। सर्वं विपाक्तमेव दृष्टिपथमायातम्। मित्राण्यचिन्तयन्—अधुना गृहं गन्तव्यम्, परन्तु राजेन्द्रेण कस्यचिद्वाकीलमहाशयस्य गृहं गत्वा परिणामो वक्तव्य इति हेतोस्स गृहं गन्तुं न प्रभविष्यति।

मित्राणां प्रस्थानानन्तरं स एकस्मिन्नल्पीयसि सेतौ स्थित्वा विश्राममभिललाष। परमस्य क्व सम्भव, तस्य विचाराः पुनः प्रथमतृतीयश्रेणीविषये येन्द्रिताः। तदा स एकं विचित्रं सन्ताप व्याकुलत्वं अन्धकारं चानुबभूव।

प्रतीतं यत् सर्वत्र शून्यताया जडताया प्रसारो बभूव। यद्यपिऽमनसो विनोदाय प्रयत्नं करोति। विवाहः कीदृश, कथं च जातः। विवाहानन्तरं दिवसाः। तेषां नातिविस्पष्टं चित्रम्। पत्नी, तस्या अश्रुव्याप्ते चक्षुषी। तयोरन्तः एकोऽपारः सागरः। तस्मिन्मग्ना भवन्ती एका दीपमाला। आः, अधुना सा नितान्तीय। तत्र पुनः सैव तृतीया प्रथमा च श्रेणी। कञ्चित्कालं यावत्सर्वे विषया अवरुद्धा भवन्ति। तृतीयश्रेणीं विहाय किञ्चिदन्यद्वस्तु तस्य मस्तिष्के नायाति। यथा कश्चित् टङ्कः ( टँङ्क ) कस्याञ्चिद्विशालाया उन्नतायाश्च शिलायास्सम्मुखं प्राप्य अकिंचित्करो भवेत् तथैव तस्य विचारधाराऽपि तृतीय-

श्रेण्यास्समोपमागत्यनिरुद्धा जाता। यथा शिला भग्ना न भवितुमर्हति तथैव तस्य विचारा। ईदृशा विचारा ये अदम्या आपि मस्तिष्क भेत्तुं नालम्।

अस्मात्स्थानादन्यत्र मनः प्रापयितुं प्रयासस्तथैव व्यर्थं यथा कस्मिंश्चिद्भाण्डे निहितं पारदं निम्नस्थानादुपरि सञ्चाययितुं न कोऽपि समर्थः, परन्तु अस्यापि कृते न साम्प्रतं समयः। अधुना कोऽप्यन्यो नोपायः। इदं तावन्महद्शोभनीयं श्रेण्याः कृते परन्तु यद्यन्य उपायः स्यादपि, तथापि स असाध्योऽपि वर्त्तते।

हे भगवन्! अधुनापि कोऽपि समागत्य कथयतु यत्स उत्तमश्रेण्यामुत्तीर्णः। किं वदिष्यन्ति महानुभावाः। एवं स स्वात्मानमेव पृच्छन्नासीत्। एतदभ्यन्तरे प्रतीतं यत्कोऽपिकथयति—भवान्प्रतिवर्षं प्रथमश्रेणीमेव प्राप्नोपि नु। परम्, अस्मिन्नपि वर्षे ध्यानं देयमेव, कदाचिदुज्ज्वलतायां मालिन्यं नायातु, कश्चिद् अट्टहासं करोति, नहि कुत्रापि किंचिदपि नास्ति। स दृष्टिविक्षेपमितस्ततः कृत्वा पुनश्चक्षुषी निमीलयति। हा, इयं स्मृतिरपि कियद्भयानकं वस्तु। परम्, . एतदपेक्षया मरणमेव श्रेयः इति केनचिदभिहितं युक्तमेव, एवं स्मरन् किंचिज्जजल्प। तत्पार्श्वत एव मार्गमतिक्रामन् कोऽपि पश्चाद् दृष्टिं निक्षिप्य अवोचत्—विस्मयं विकृतमस्तिष्कः उन्मत्तः! मित्र, अस्ति विपरीतः चेतनः एव।

उन्मादोऽपि भाग्ये नास्ति, मित्रवर, उन्मादः कीदृशः सुन्दरं वस्तु, आत्मविस्मृतिः। परन्तु मया साकं तु प्रथमा तृतीया इत्यादीनि सर्वाणि वस्तूनि स्फुलिङ्ग इव गाढं मामालिङ्ग्य न त्यजन्ति।

हास्यमुद्रया मदीया पत्नी अप्येवं जगाद। अन्ततः यदि त्वं प्रथमो न भविष्यसि तर्हि को भविष्यति। अथ तेन स्वचक्षुषी गाढं निमीलिते।

नहि नहि, इदं सर्वं युक्तम्। अनुचितं चेदं सर्वं चिन्तनम्। अथविवेकोन्मुखी स्वोचत-मूर्त्तेयम्,।

प्रथमं तानं। भवितुमर्हति पाण्डेय! ममापि काचिदाशा तृतीय. पञ्चाण्यपि अस्मिन्वर्षे पूर्ववदेवासन् तृतीय. भवितुमर्हति भवितुमर्हति।

नगरस्य जाज्वल्यमानं विद्युतां प्रकाशमपहाय बहिः कुत्र तस्य

पादा अग्रेसरन्ति। इदं सोऽपि जानाति न वा जानाति इदं को जानातु को वा पृच्छतु।

तृतीयस्मिन्दिने तस्मिन्नेव समाचारपत्रे वृत्तान्तः प्रकाशितोऽभवत् 'एकेन यूना आत्माहत्या'।

'गोरक्षपुरान्तर्गत महुआग्रामनिवासी राजेन्द्रनामक छात्र परीक्षाया प्रथमश्रेण्या अनागमनेन वाष्पयानचक्रस्य नीचै छिन्न भिन्न शरीरावयवस्सन् मृतः।'

तस्यैव समाचारपत्रस्य तृतीये पृष्ठे विश्वविद्यालय-रजिष्टारमहोदयस्यैका सूचनापि निस्सृता—

"हिन्दीविषये एम ए कक्षाया अन्तिमे वर्षे प्रथमश्रेण्या-मागताना त्रयाणा छात्राणा नामानि भ्रमात्तृतीयस्या श्रेण्या निस्सृतानि" इति।

अपर च "तृतीयश्रेण्यामागतना छात्राणा प्रथमश्रेण्या निस्सृतानि। सर्वप्रथमो राजेन्द्रप्रसादत्रिपाठी, इति। द्वितीयो रामगोपाल-सिंहो ऽखिलेश इति।"



# चम्पा

श्री द्विजेन्द्रनाथमिश्रः

( साहित्याचार्यः, वाराणसेयसंस्कृतविश्वविद्यालये साहित्यप्राध्यापकः )

श्रूयते सैषा कथा। कस्यचिद् गिरेरुपत्यकायामासीदेक लघु राज्यम्। राज्ये यत्किंचिदप्यपेक्षितं भवति तत्सर्वमासीत्, किन्त्वतिसामान्यरूपेण। राजा आसीत्, राज्ञी आसीत्, राजभवनमासीत्, आसन् सेनाः,सामन्ताश्च। किन्तु नासीद् युवराजः। नासीत्कोऽपि राजपुत्रः। अपितु केवलैका राजपुत्री। नाभवत्किल तत्पश्चादन्या कापि सन्ततिः।

राजसुता नाम आसीच्चम्पाकुमारी। चम्पाकुसुमं तस्यै बहु रोचतेस्म। राजभवनस्य निकटस्थगृहारामेषु चम्पाया अगणिताः नवपादपा आसन्। तेष्वगणितानि कुसुमानि विकसन्ति तेषां सुगन्धेन समीरोऽपि ससुगन्धोऽभवत्, सुगन्धेनानेन राजकुमार्याः हृदयं विह्वलं भवतिस्म।

अत एव यदा कन्यका अजायत, राजा तां चम्पाभिधेयामकरोत्। एतन्नाम राज्ञै बहुरुचत्।

चम्पाकुमार्या जन्मदिवसे राज्ये प्रतिवर्षं महानुत्सवो भवतिस्म। अस्मिन्नवसरे प्रजाजनाश्चम्पापुष्पभारभराःशाखा राजकुमार्यै ददतिस्म। आसीत् सैषा राजाज्ञा।

एभिर्जन्मदिवसैः सहैव चम्पाकुमार्या वयोऽप्यवर्द्धत्, वयसा सहैव सौन्दर्यं, सौन्दर्येण सह रूपश्री। श्वो दिवसे या अबोधा बालिका आसीत् अद्य सा किशोरी संजाता। पुनः क्रमशः उषःकालिकपद्मकलिका इव नवयौवनस्य लालिमा सन्निविष्टोऽभवन्मुखे तस्याः।

( २ )

आसीदेष षोडशतमो जन्मदिवसः। अनावृते राजमण्डपे राजदम्पत्योर्मध्ये राजकुमारिका चम्पा शुभ्राभ्रपरिधानैराच्छन्ना अन्नपूर्णा इव सिंहासने संस्थिता।

आसीदधस्तले रजतस्यैका लघ्वी पादपीठिका। पादपीठिकाया उपरि

रक्तकमलकोमलौ चरणौ विराजेते ; सामान्यस्तरीया जना एव चरणेषु स्वोपहाराणि उपस्थापयन्ति स्म । आसीदेषा राजाज्ञा ।

स्वच्छसरोवरे सहस्रदलमिव स्वक्रोडे राजकुमारी हस्तौ निधाय अतिष्ठन् । यदा कोऽपि प्रजाजनः आगत्य स्वोपहारं समर्पयति तदा सा तद्दिशामवलोक्य साचिस्मिता भवतिस्म । राजमण्डलस्य महाजना यज्ञधूपमिव पावनयोः, देवताप्रसाद इव अप्राप्ययो करकमलयोरेतयोरेव स्वोपहाराणि ददतिस्म । आसीदेषा राजाज्ञा ।

शरदर्तौ पूर्णचन्द्र इव राजकुमार्या अनवद्यमाननमासीत्, सैषा अवर्णनीया छविः । मुखे तस्या एकताननेत्रेण प्रष्टुं न कोपि साहसमकरोत् । राज्ञ सुता, राजकुमारी चम्पा !! एतस्या स्वर्गीयसौन्दर्यं जनसामान्यदृष्ट्या कलुषितं भवितुं शक्नोति ।

शंख इवास्ति चम्पाकुमार्या ग्रीवा, ग्रीवायां च चम्पापुष्पाणां हारा विलसन्ति स्म, हारानेतांश्च राजस्योपकर्मचारिजनास्तां परिवेशयन्ति स्म ।

राजकुमारी सर्वेषां लघूना महतान्वोपहारान् शिरो नमयित्वा रक्ताधरेणेषद्विहस्य स्वीकरोतिस्म ।

अस्मिन्नेवावसरे विचित्रैका घटनाघटत् । पूजार्थनां मध्यतः एको युवाऽग्रे आगतवान् । सः पूजामालिकां कराभ्यां गृहीत्वा, राजकुमार्याः समक्षमागत्य तस्या मुखं निर्निमेषः सन् विलोकयति स्म । उभेऽपि राजदम्पत्यौ चकितचकितावास्ताम् । मन्त्री किंकर्तव्य विमूढतां गतः । राजकुमार्या अधरेण च स्मितमलोपि ।

मन्त्री झटिति समीपे अगत्य युवानमुक्तवान्–"समर्पय, समर्पय" युवाऽग्रसरोऽभूत् । किन्त्वाश्चर्यम् !!

सः स्वीयां मालिकां राजकुमार्याः पाणौ समर्पयितुमैच्छन् । पितरौ चकितावास्ताम्, मन्त्री विकलस्तथा राजकुमार्या स्मितमदृष्टतां गतम् । मन्त्री निरुद्ध्य अकथयत्–"महान असभ्योऽसि ।" पुनरिंगितेनकथयत् "चरणेषु······।"

किन्तु निर्भीकः स युवा कर्णमेव नाददत् । स सत्यमेव स्वीयां मालिकां राजकुमार्या हस्तयोरेव निक्षिप्तवान् । महदसमंजसमजायत् । राजाज्ञाया उल्लंघनम् ! क्रुद्ध सन् मन्त्री पृष्टवान्–"कोऽसित्वम् ?"

मालिका राजकुमार्या हस्ते एव स्थिता। युवाऽवदत्—"वैदेशिकोऽस्मि। योजनानां शत दूरे स्थितो मदीयो ग्राम। अस्म्यहं तत्रत्यः राजसेवकः। आगतोऽस्मि देशाटनायेति।"

पुन संक्षेपेणैव स्वकीयराज्यस्य रीतिपरम्परामावेद्योक्तवान्—अस्मदीये राज्ये राज्ञ पूजामाला निजहस्तगुम्फितैव भवति—स्वर्णकारः स्वर्णस्य मालिकां गुम्फति—लौहकारो लौहमालिका गुम्फति—काष्ठकारः काष्ठपुष्पाणाम् ।

सर्वे चकितचकिता आसन्।

युवाऽवदत्—"तथा सर्वे स्वकीयां मालिकां राज्ञो गलप्रदेश एव निक्षिपन्ति—महती स्याल्लघुर्वा ।"

सर्वेऽशृण्वन्ति।

पुनः सोऽवदत्—'मदीयेयं मालिका निजहस्तनिर्मिता—इमानि कुसुमान्यपि मदीयहस्तविरचितानि तथा च स्वेनैवसुगन्धितान्यपि।

सर्वे एव स्तब्धाः सन्ति।—स्वहस्तनिर्मितानि पुष्पाणि!!! राजा हस्तौ प्रसार्य मालिकां तां जग्राह। साम्राज्ञी नम्रीभूय पश्यति, मन्त्री निर्निमेष।

अवितथमवितथम्, इमानि चीरविनिर्मितानि कुसुमानि। किन्तु कथं कया रीत्या वा विनिर्मितानि—बहुकलाभराणि!" इति सर्वेऽवदन्।

राजा मालिकां राजकुमार्या हस्ते परावर्तयन्, तथा युवकं पश्यन्नवोचत्—"मालाकार! वय तवानेनोपहारेणातिप्रसन्नाः स्मः।"

पुनः कोषाध्यक्ष नेत्रविषयीकृत्य आदिष्टवान्—"दीयतां पारितोषिकम्।" युवकेनाभिनन्दनमकारि।

राजकुमारी मालामादाय स्वतः ग्रीवायां परिवेशितवती। युवकः स्मितमकरोत्। राजकुमार्या मुखे लज्जारुण्य स्फुटमभवत्।

( ३ )

सन्ध्या वेला। राजप्रासाद सम्पूज्य नीचैरगाद्रविसर्पति.। प्रासादस्य पृष्ठभागे आसीदेकः सुन्दरगृहारामः। उद्यानेऽस्मिन्नानाविधफलपुष्पभारभरा वृक्षलतानिकुञ्जा आसन्।

उद्याने शान्तिसाम्राज्यमस्ति अधुना। शाखिना शिखरेषु आसीत्किरणानां जालवितानम्। प्रवहतिस्म मन्दिरमन्दवायु। सद्यो विकसिता. कलिकाः शनैः शनैः स्पन्दन्तेस्म।

एतादृशे मधुरमधुरे अवसरे राजकुमारी विहर्तुमागता। विहरती सा उद्यानस्य प्राकारसान्निध्ये समायाता। राजकुमारी निरम्य बहिर्निस्सरत· प्रजाजनान् विलोकयन्ती आसीत्। सहसा न जाने कुतः कुसुममेकमपतच्चरणे। राजकुमारी त समादाय अचिन्तयत्— कीदृशोऽसौ मोहक सुगन्धः ! चम्पाया· कुसुममिदं किल !!

गलप्रदेशे सैव मालाकारस्य मालिका। न जाने किमागच्छत् राजकुमार्याश्चेतसि। सा ता मालिका जिघ्रति, किन्तु नासीत्कोऽपि गन्ध.। सुगन्ध कथ विलुप्त, मालाकारस्य हस्तनिर्मितकुसुमाना रागोऽपि न दृश्यते। राजकुमारी झटिति मालिका कण्ठान्नि सारितवती।

तस्मिन्नेवावसरे अवलोकित तया पुरत राजमार्गे स एव युवा मालाकारो गच्छति। अनायासेनैव राजकुमारी आहूतवती— "मालाकार !"

मालाकारः समागत। राजकुमारीमभिवाद्य प्राकारस्योपरिभागे तस्याः समक्षमतिष्ठत्।

राजकुमारी अवदत्—"तव मालिकासुरभिस्तु नास्त्येवाधुना, इमानि कुसुमानि कथ कालिमाभूतानि सजातानि ?

युवाऽवदत् राजकुमारि, हस्तनिर्मितेय माला कियत्काल यावत् तिष्ठेत्। भवदीयोद्यानकुसुमानि तु दिवसैकमात्रमेव जीवन्ति। मदीया माला कियत्काल यावन्नवीना स्यात् ?

तत स राजकुमार्याश्चन्द्रानने दृष्टिं स्थिरीकृत्य स्मित कर्तुमारेभे। राजकुमारी लज्जया अक्षिणी निमील्य शनैरवदत्-दास्यसि किमपरा मप्येकां मालिकाम् ?

तादृशी मालिका तु नास्ति मत्पार्श्वे राजकुमारि, तादृश्या मालिकाया गुम्फनेऽपि नाहमद्य समर्थः। अन्यैकान्या मालिका मत्पार्श्वे आज्ञापयसि चेत् तामर्पयामि। युवावदत्।

कौतूहलेनाक्रान्ता राजकुमारी पृष्टवती—"कीदृशी सासीत् मालिका ? मालाकार ! केन सा गुम्फिता ? किं मौक्तिकैः ।"

आम्, मौक्तिकैरेव राजकुमारि, किन्तु न सन्ति ते सागरीया, ते मौक्तिकास्तु मदीयमानसशुक्तिसमुद्भवा' सन्ति। ते एवमेव । अनुग्रहीष्यसि राजकुमारि ? स्वीकरिष्यस्येतां मालिकाम् ?

राजकुमारी नखशिखान्त कम्पमाना विनतवदना न किंचिदप्यूचे प्रतिवचनम्।

(४)

राजकुमार्याश्चम्पाया शयनकक्षे दक्षिणस्या दिशि अस्त्येको गवाक्ष । तस्योपरि विनता सन्ति कदम्बविटपा, मन्ये ते कक्षस्य दृश्य दिदृक्षन्ति।

गवाक्षमुद्घाट्य राजकुमारी मृदुलशैय्यायां शयाना आसीत्, शुक्लपक्षीया रजनी, समुदितो निशानाथ। पथभ्रान्त एक शशिरश्मि कदम्बशाखासलग्न' पक्षान्तप्रदेशे सपतित ।

राजकुमारी स्वपन्ती सती विचारयति—तस्य युवकमालाकारस्य चरितम्, उत्सवदिवसस्य दृश्यम्, प्राकारस्य परभागम्, "अनुग्रहीष्यसि राजकुमारि, स्वीकरिष्यसि मालिकाम् ?"

राजकुमारी दुग्धधवलायां शय्यायां शयाना स्वगतमुक्तवती ।" कदम्बविटपतो ध्वनिरश्रूयत्— 'आम् राजकुमारि।"

'मालाकार ! त्वमत्रागतोऽसि, अस्यां वेलाया।' 'आम् राजकुमारि, 'कथमागतोऽसि ?'

'माला समर्पयितु राजकुमारि !' राजकुमारी निर्वचना सजाता। 'राजकुमारि।' 'आम् मालाकार !' 'स्वीकरिष्यस्येतां मालिकाम् !'

राजकुमारी तु निर्वचना सञ्जाता। प्रासादस्य सिंहद्वारस्थप्रहरिणा समुद्घोषिता प्रहरसमाप्ति घण्टानादससूचनानन्तरमेव। पुनरपि नैस्तब्ध्य प्रासरच्चतुर्दिक्षु।

तदा राजकुमारी शनैरवदत्—'मालाकार ! याहि', 'किन्तु मालिका ?'

कदम्बविटपेन प्रश्न सजात

'मालिका राजकुमारि !', राजकुमारी नमयित्वा शनैरवदत्— "वर्धयिष्यामि।"

(५)

स एव कदम्बविटप स एव गवाक्ष। युवकमालाकारस्य प्रति-

दिन राजकुमार्या सम्मिलन भवति, भवन्ति च दैनन्दिन्यो वार्ता, न जाने कियत्य मधुरवार्ताः सन्ति ता !

अन्ते युवकमालाकारोऽवदत्—"अधुना तु त्वया स्वीकरणीयेयं मालिका राजकुमारि !" राजकुमारी पूर्ववन्मौनमालम्बितवती।

युवको वक्तुमारेभे—'अद्याहं निर्णयं वाञ्छामि, यदि मदीयेयं मालिका अस्वीकृतास्ति, सूर्योदयात्पूर्वमेव राज्यमिदं त्वदीयं त्यक्त्वा गन्तुकामोऽस्मि, अधुना नास्मि समर्थोऽधिकं प्रतीक्षितुम्।"

कुत्रगमिष्यसि ! राजकुमारी दुःखभारभरेण स्वरेण पृष्टवती। स्वदेशे परावर्तिष्यामि। मदीयो देशः , कीदृशी तत्र सुखशान्तिरस्ति, कियदानन्दोल्लास, बहुदिनानि व्यतीतानि स्वदेशपरित्यागेन।

शनैरुक्तवती राजकुमारी 'मालाकार।' उत्तरयत् युवा—"आम् राजकुमारि !"

'त्वदीयाया मालिकाया अस्त्यधिकाधिकं मूल्यम्। जानासि त्वत्कृते मया सर्वस्वमेव दातव्यम् ?'

'राजकुमारि', अवदन्मालाकारः करुणस्वरेण—"किमेतत्कृते नाहं परिगणितोऽस्मि योग्यः ?"

'मालाकार मत्पिताऽस्ति राजा, अहं च राजपुत्री, तुभ्यं सर्वस्वं दत्त्वा राज्ञोऽपमानं करिष्यामि, पितरं च पीडां दत्त्वा सुखं प्राप्तुं नैव शक्ष्यामि।',

'मालाकार !' तदा राजकुमारी शनैरस्पष्टस्वरेणावदत्—"यदि त्वमपि राजकुमारः स्याः ।"

मालाकारः शृणोति। तेनोक्तम्—"राजकुमारि, विदितमिदमासीत्, किन्तु मया विचारितं यत्रहस्यं न पूर्वं कथयामि। अहं तु पश्चात् सर्वमपि श्रावयित्वा त्वां सुखितां कर्तुमैच्छम्। राजकुमारि माला तु मदीया नो त्वया अस्वीकृता। पितुरपमानस्याशङ्कापि नैव कार्या। अधुना नैव गोपयामि। सुखिनी भव, नास्म्यहं मालाकार, वस्तुतः राजकुमारोऽहम्।

'राजकुमारः !', चम्पाकुमारी चकिताभवत्।

आम्, राजकुमारि, राजकुमारः—अहमस्मि स्वल्पराज्यस्य राजा। वेषं परिवर्त्य, त्वां पूजयितुं, प्रसादं च प्राप्तुमागतवानासम्।

राजकुमारी उत्थाय अतिष्ठत्। स्नेहपूर्णकण्ठेनावादीत्—"तत्किं मां परीक्षितुं समागतो राजन् ?"

राजकुमारेण तथैवोत्तरितम्—"नहि राजकुमारि, सत्यमहमर्घं समर्पयितु ।"

किन्तु राजकुमार्या नैव श्रुतेय वाक्।

विद्रुमरक्ताधरोष्ठेन साचिस्मितं विधाय गीवा च वक्रीकृत्य सक्तवती—वंचक !!!

(६)

"इयद् दूर चलितु कथ पारयिष्यामि ?"

"अश्वो मे वर्तते।"

"आतपेन देहस्तपिष्यति।"

"अहं स्वतनुच्छाया करिष्यामि।"

"पथि पिपासया कण्ठ. शोषमेष्यति।"

"अहं पानीयमन्विष्य आनेष्यामि।"

"देह धूलिरावरिष्यति"

"अहं शिरोवेष्टनेन प्रोञ्छिष्यामि।"

"रात्रौ कुत्र शयिष्ये ?"

"ममाङ्के शयिष्यसे।"

"वने सिंहहस्तिप्रभृतयो भवेयुः।"

"शस्त्राणि मे वर्तन्ते।"

किमपि वक्तुमथ नावशिष्यते।

तदापि राजकुमार्योक्तम्—"राजन्, कञ्चित् कालमिहैव ननु निवस। शरदि समागतायां ते राज्ये चलिष्याम।"

"न हि राजकुमारि", युवाऽकथयत्—"नेत. पर निवसितु शक्यते। राज्येऽव्यवस्था सञ्जाता भवेत्।"

राजकुमारी मौनमगृह्णात्।

सविनयं राजकुमारोऽकथयत्–'राजकुमारि !'

"राजन्"

"चलिष्यसि ?"

"चलिष्यामि राजन्"

अतिविस्तृतः पन्था क्रीडाभिरेव समाप्तः, कष्टस्य लेशोऽपि राजकुमार्या नानुभूतः, यावद्दिनं तौ चलत। रात्रौ परस्परमङ्के शिरो निधाय शयाते, क्षुधि समुत्पन्नायां फलानि अवाप्य भुञ्जाते,

खादत', पिपासाया नद्या जलं सेवेते। बहुभिर्दिनैर्निजराज्य-सीमाऽलभ्यत। राजकुमार प्रसन्न आसीत्, राजकुमारी च ततो-ऽप्यधिकम्।

(७)

तस्मादप्यल्पमिदं राज्यम्। किञ्चिदस्ति, किञ्चिन् नास्ति। विलक्षणो राज्यप्रबन्ध। सर्वत्र 'हा-हन्त' श्रूयते। पश्यत एव चौर्यं, लुण्ठनं क्रियते। राज्ञा च ज्ञायत एव न हि। राजपुरुषा अनीत्या 'करान्' गृह्णन्ति, सेनापतिं पीडयति। कोऽपि नियन्ता नासीत्। राजाऽविक्षिप्तवृत्तो वर्त्तते।

स्वल्पवया हि राजा। स रूपवानस्ति, परं बुद्धिर्न तदनुरूपा। देव इव दृश्यमानो, मनसा न तादृशः। विचित्रा तदीया प्रकृतिः। राज्यस्य, प्रजाया वा चिन्ता तं न स्पृशति, सर्वदा स रागमत्तस्ति-ष्ठति,-मृगया करोति, सुदूरतरप्रान्तेभ्य सुन्दरीरन्विष्य युवतीर्निज-प्रासादमलङ्करोति। बह्व्यस्तस्य राज्य, सर्वा सुन्दर्यः, सर्वा अनुपमा।

राजकुमारी चम्पा सर्वमिदं न जानाति। सा परं प्रसन्ना वर्त्तते, राज्ञा तस्यै स्वच्छदृश्यशुक्तिमौक्तिकमालाऽर्पिता—नेदं साधारणं किञ्चित्। तस्या सर्वस्व तन्मायया विक्रीतम्, तदापि सा प्रस-न्नाऽऽसीत्।

प्रासादस्योपरितने भागे स्फटिकमयी धवलाऽट्टालिका। तत्र प्रधानराज्ञी निवसति।

एतावतः पूर्वं निवसन्त्या कृते राजाऽऽज्ञाऽभूत-अधस्तनप्रा-सादे गम्यताम्। अधः-यत्र एकैकशः बह्व्यो राज्ञः उपरितोऽवतीर्य आगताः।

भृकुटिमुन्नमय्य प्रधानराज्ञी अपृच्छत्-"कुतः ?"

सन्देशवाहिकाऽकथयत्-"पूर्णस्तेऽवधिरिह निवासस्य। अभिन-वेह 'महाराज्ञी' निवत्स्यति।"

राजकुमारी चम्पा सर्वमिदं न जानाति। स्फटिकाट्टालिकायाम् निवसति। हन्त! कियदिह सुखम्! चतुर्दिक्षु दृश्वेविमा-दृश्वेविमा।

प्रतिक्षणमागत्य राजा पृच्छति—"कष्टम् तु नानुभूयते ?"
आनन्दमग्ना राजकुमारी चम्पा कथयति—"न हि राजन्।"

रात्रौ राजा इहैव निवसति। व्याप्तायां ज्योत्स्नायां, टिमटिमायमानासु तारिकासु, राज्ञो वक्षसि शिरो निधाय संसारस्य सुखवार्ताः राजकुमारी चम्पा आकर्णयति, आकर्ण्य च साश्चर्यं पृच्छति "एवम्"।

( ८ )

इहाप्युद्यानमस्ति। परं तत्र 'चम्पा' कुसुमानि न समुल्लसन्ति। कस्य देशस्य एतानि कुसुमानि। यद्यैतानि विकसन्ति, उद्यानमालोकित भवति, परमेषु सुवासो न विद्यते। कीदृशानि एतानि। "

सूर्यास्तात् पश्चाद्-राज्ञाऽऽगन्तव्यमासीत्। तं विना राजकुमारी शून्यतामनुभवति। अट्टालिकातोऽवतीर्य सा उद्याने भ्रमितुमागच्छत्। कुसुमेषु मुखं निधाय जिघ्रती आसीत्। हन्त, कोऽपि न सुवासः। कथमेते राज्ञे रोचन्ते। चम्पाया एकोपि तरुर्नास्ति। सा मनस्येवाचिन्तयत्, अद्यागते राजनि चम्पार्थं निवेदयिष्यामि। स्वपाणिभ्यामेव चम्पातरुकमारोपयिष्यामि। पुष्पिते च तस्मिन् मालां ग्रथित्वा तस्मै समर्पयिष्यामि।

—समीपवर्तिकुञ्जे कश्चिद् मन्दम् व्याहरति, राजकुमारी कर्णं दत्वाऽशृणोत्—

कश्चिद् कथयति "परिणीय तामानीतवानसि ?"

"न हि राज्ञि"—कश्चिदुदतरत्।

अरे अन्वय राज्ञः स्वर !—राजकुमारी शृणोति—

"तन्मम कृते सपत्नीमानीतवानसि ?"

"न हि, देवि !"

—अरे, तद्विषयकमेवोच्यते किमु ?—राजकुमारी शृणोति।

"तत्का सा ?"

"सा ?" राजाऽकथयत्—"देवि, सा निर्धनस्यैकस्य अकिञ्चनस्य पुत्री, अनाथेतिकृत्वाऽऽनीता मया।"

हा हन्त !—राजकुमारी शृणोति।

राजा पुनरकथयत्—"देवि, मा कुप्य, सा त्वदर्थं केवलमानीता। तव कृते सुसुन्दरी दासी समपेक्षिताऽऽसीत्।—सा तव सेविकाऽस्ति। सा तव शिशून् विनोदयिष्यति।"

चम्पा सन्नाशून्येवाभवत् । अधिकमाकर्णयितु नास्थात्, वेगान् ततो न्यवर्तत ।

राजा निशायामागच्छत्, पर राजकुमारी तस्यै कमपि शब्दम् नाकथयत् ।

राजाऽपृच्छत्—"किमस्वस्थाऽसि ?"

"आम् !" महता काठिन्येन राजकुमारी उदतरत् ।

राजा निद्रितोऽभवत् । राजकुमारी जाग्रती अतिष्ठत् । हन्त ! अधुना किं सा कुर्यात् ?

हाटके एकतः विषस्य विपणि । तत्र राजकुमार्यागत्यातिष्ठत् ।

स्वकर्णभूषण चापतार्य आपणस्वामिन पुरो निधाय, सकरुणमिव प्रावोचत्—"भ्रातः, अनेन कर्णभूषणेन विषं मे प्रयच्छ ।"

"विषम् ।" वणिगपृच्छत्—"तेन किं करिष्यसि पुत्रि !"

"भ्रातः, अपेक्षा मे वर्तते ।"

तत वणिगकथयत्—'कर्णभूषणेन विषं न दीयते । मुद्राभि तद् विक्रीयते ।'

किं कुर्यात् ? राजकुमारी दुःखेन बाष्पमुदसृजत्, तदीय म्लानकमलवदाननमालोक्य वणिजो दयोत्पन्ना । स भूषणेन सममूल्यं विषमदात् ।

स्वर्णपात्रे विष निधाय राजकुमार्यपिवत्

कश्चिदन्य उपायो नासीत् । राज्ञः पुत्री साऽऽसीत् । अपमान विरोद्धम् अपि शक्ता नासीत् । कश्चिदन्य उपायो नासीत् ।

स्वर्णपात्रे विष निधाय राजकुमार्यपिवत् ।

निशि राजाऽऽगच्छत् । दुग्धधवलशय्यायां स्वच्छपरिच्छदा राजकुमारी शयानाऽऽसीत् ।

उपान्त उपविश्य राजा प्रेम्णाऽऽमन्त्रयत्-"राज्ञि ।" उत्तर न लब्धम् ।

"राज्ञि, चम्पे !"

उत्तर न लब्धम् ।

सञ्जातसंदेहो राजाऽवनम्यापश्यत्, अस्पृशत, । सर्वं शान्तं—सर्वं ननु शान्तम् ।

किञ्चित्कालात् पश्चाद् राजकुमार्याः चम्पायाः पिता सैन्येनागमत् । युवकस्य राज्ञः सैन्यमव्यवस्थितम्, सेनाध्यक्षश्च मदोन्मत्त

आसीत्। राजा पराजितोऽभवत्। राजकुमार्याः चम्पाया निगृहीतस्य युवकस्य राज्ञः शिरः कर्त्तित्वाऽनयत्। राज्यमलुण्ठत्।

अतिपुरातनं खल्विदं वृत्तम्। तत एतावद् बहूनि परिवर्तनानि सञ्जातानि, परं राजकुमार्याः चम्पाया करुणकथा राज्ये तथैव गुञ्जति।'' ''प्रतिवर्षं वर्षर्तुरायाति। मेघाच्छन्नं भवति नभः, निलीयन्ते च चन्द्रतारिका, तदा राज्ये प्रतिगृहं दोलामाबद्ध्य, चम्पाकुसुमैः केशान् प्रसाध्य, राज्यस्य कुमार्यः दोलयन्ति, राज्ञः पुत्राश्च चम्पायाः करुणापूर्णामिमां कथां गायन्ति।

कथामिमामाकर्ण्य मेघा गर्जन्ति, व्योम रोदिति, पवनः कम्पते, वसुधा चाप्लाविता भवति।



# वासन्ती

श्री बटुकनाथशास्त्री खिस्ते

( साहित्याचार्य, वाराणसेयसंस्कृतविश्वविद्यालये साहित्यप्राध्यापक )

'को नाम पाकाभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमीष्टे'
( भवभूतिः )

(१)

'पुत्रि! किमित्यत्र मौनमालम्बमाना शून्यदृष्टिर्मनसि भ्रमता विचारेण व्याकुलीकृतेवाद्य प्रतिभाससे?'

एतदाकर्ण्य सहसैव विचारनिद्रायाः प्रबुद्धा वासन्तीसमीरणोल्लासितं दुकूलमावृण्वती समुत्थाय पितरं दीनानाथशर्माणमवादीत्-'तात! अद्य प्रातःकालादारभ्य वसन्तविषये रणरणकचेष्टितमानमानसा तदीयं भागधेयं कष्टकरमेवावलोकयामि'। वसन्तः किल वासन्त्या ज्यायान् भ्राताऽऽसीत्। अथ दीनानाथशर्मा किंचिद्गम्भीरमिव स्वाकारं विधाय भूयोऽप्यवोचत्-'पुत्रि! अलं तदीयचिन्तया। स खलु मया बहुशो विनिवारितोऽपि न तां व्यसनितां त्यजति। सम्प्रति मया आपणमपि परित्यक्तम्। अद्यैव पश्य कीदृशं कलहं कृत्वा बहिर्निर्गतः। भगवता पुत्रस्त्वेक एव दत्तः, किन्तु सोऽप्येवं विधः। विधेर्विलसितमेतत्। किमन्यद् ब्रूमहे' इत्येव वादिनो दीनानाथशर्मणो वदनमान्तरविषादजनितेन कालिम्ना समाच्छादितमभूत्। अथ वासन्ती तां पितुरवस्थां विलोक्य विषयपरिवर्तनेच्छया वातायनादुत्थाय जगाद-'षड्वादनसमयो दृश्यते, भवतोऽपि सन्ध्योपास्ते कालोऽयम्। पथ्यप्रायमेव भवेद्दर्शनम्' इत्युक्त्वाऽभ्यन्तरं प्रविवेश।

(२)

दीनानाथशर्मणो गृहं लक्ष्मणपुरे नगरमध्य एवाऽऽसीत्। एतेषां गृहे पत्नी, एकः पुत्रः, एका कन्या चेति परिवार आसीत्। कन्या वासन्ती बुद्धिमती, सदाचारसम्पन्ना, युक्तायुक्तविवेकाऽभिज्ञा

चाऽभूत् । सम्प्रति सा शैशवं समाप्य यौवने पदमाधातुं सन्नद्धैवाऽऽसीत् । दीनानाथशर्मा तस्मिन्नेव नगरे एकस्मिन्नाङ्ग्लविद्यालये संस्कृताध्यापक आसीत् । वेतनं चासौ अशीतिमुद्रात्मकं लभते स्म । तेनैव द्रव्येण गार्हस्थ्यशकटं यथाकथमपि चलति स्म । पुत्रस्य दुराचरणेन सर्वदैवैतस्य चेतः परितप्यते स्म । कन्यायाश्च विवाहकाल मुपस्थितमालोक्य वरान्वेषणे सप्रयत्न आसीदसौ ब्राह्मणः । साम्प्रतिकेषु दिवसेषु दीनानाथशर्मणो मनसि 'वत्सा सुवरप्राप्स्यति वा नवा' इत्येव विचारो नक्तन्दिवं भ्रमति स्म । सूनोर्दुर्वृत्तस्थया दीनानाथस्य कन्यैव पुत्र-प्रेम्णो भाजनमासीत् । दीनानाथस्य पत्नी नवीनाचारानभिज्ञा सरलस्वभावा सदाचारपरायणा मनोरमाऽऽस्यासीत् । तस्या एव चरितं वासन्त्यामपि प्रतिबिम्बितमासीत् । वसन्तः प्रथमं मातुः शिक्षया सुशीलो बभूव । किन्तु पश्चान्नागरिकविटानां सङ्गत्या कुमार्गमवततार । एतदेवैकं शल्यमासीद्दीनानाथमनसः एतदभावे तदीयं गार्हस्थ्य सुवर्णमयमभविष्यत् ।

## ( २ )

शनैः शनैर्भगवान् भास्करो भुवनतलं स्वकीयभाभिर्भासयन्नभोऽङ्गणमभजत् । प्राभातिकः पवनोऽपि सलीलं विलसन् रुचिपुरुष इव कुसुमसौरभमाघ्राय तनुलतांसदेशमालम्ब्य वहति स्म । प्राची तस्मिन् काले सकलेभ्यो जनेभ्य उत्साहसम्पदमर्पयन्ती दानशीला सीमन्तिनीव दृश्यते स्म ।

अस्मिन्नेव काले दीनानाथशर्मणो गृहे मङ्गलवाद्यध्वनिरुदतिष्ठत् । आम् ! ज्ञातम्, अद्य वासन्त्या विवाहोत्सव आसीत् । अनवरतमन्तर्बहिः प्रविशता निर्गच्छता च जनसमर्देन समाकुलमासीद्दीनानाथगृहद्वारम् । सर्वतः सम्प्रवृत्तेऽपि प्रमोदप्रवाहे वासन्त्या पितरौ कयाचिद् वेदनयाऽऽक्रान्ताविव दृश्येते स्म । अद्य विवाहोत्सवे वसन्तो नागत आसीत् । न जाने स क्व पलायित आसीत् । एतदेव तयोर्दम्पत्योर्दुःखकारणमभूत् । वासन्त्याः पतिर्माधवनाथः सच्छीलो धनवान् रूपगुणसम्पन्नो वासन्त्या अनुरूप एवासीत् । वासन्ती जनसमर्दे कथमपि सहजलज्जाजडया दृशा तमवेक्ष्य तदीयं गुणगरिमाणं वयस्याभ्यः समाकर्ण्य, स्वात्मानं धन्यममन्यत । किन्तु को जानाति स्म तदा यदस्य विवाहस्य कीदृशो विपाको भवितेति ।

अथ व्यतीते विवाहोत्सवे वासन्ती साश्रुनेत्रोत्पला कथमपि पितरौ नमस्कृत्य स्वगृहं प्रातिष्ठत। वासन्त्यां गतायां मनोरमेदमवदत्—'अस्माकमेक एवाधार आसीज्जीवनस्य, सोऽपि गतः। पुत्रस्तावत् कीदृशीं पीडामाधत्त इति वयमेव वेत्तुं पारयामः। हन्त! दौर्भाग्यमस्माकं न जाने कियद्वर्तते! पुत्र एवास्माकं वंशधुर्धरः। तस्मिन्नेवासद्वृत्ते किमिवास्माकं सुखं भवेदिति।'

(४)

पतिगृहे वर्षद्वयं व्यतीतं समागतायां वासन्त्याः। एतावति काले सेव्यमानश्वशुरादिगुरुजनायां गृहकर्मसम्पादननिपुणायां वासन्त्याः सुखेनैव कालो जगाम। पत्युरपि समधिकं प्रेम वासन्ती लेभे। कदाचित् पित्रोः स्मृतिराकुलयति स्म तदीयं चेतः। किन्तु पतिप्रेम्णः प्रभावेण नाधिकं कष्टोत्पादिनी जनकयोः स्मृतिरभूत्।

किन्तु नहि सर्वदा सुखमविच्छिन्नमवतिष्ठते। कुमित्रससर्गात्, स्वात्मनोविमृश्यकारित्वात्, वासन्त्या दुर्भाग्यस्य नियतत्वात्, माधवनाथो मदिरापानमात्मयमालम्बे। प्रथमतः कियन्ति चिद् दिनानि गुप्तमसावनुतिष्ठति स्म तत् कर्म। किन्तु चतुरतरा वासन्ती सद्य एव तदलक्षयत्। न प्रत्यक्षमुच्चचार पत्युर्मनःक्लेशादयभिया। भृशमसौ दुःखसागरे निपतिता पत्युरुद्धरणायाहोरात्रंविचारयन्त्येवातिष्ठत्। अथैकस्मिन् दिने विलम्बेनायातं मदजलघूर्णमानचक्षुर्युगलं माधवनाथमवेक्ष्य वासन्ती सद्य एव शयनीये तमवस्थाप्य तालवृन्तेन शनैः शनैर्वीजयन्ती पत्युः क्रोधाशङ्कया निवार्यमाणेव मन्दमन्दाक्षरा परिपप्रच्छ—'नाथ! कोऽयमद्यत्वे समवलम्बितो भवता पन्था? अति गर्हणीयः परिहरणीयश्चायम्' इति। अथैतदाकर्ण्य सापराधमिव स्वात्मानं मन्यमानः शिरोऽप्युन्नमयितुं न शशाक माधवः। किन्तु सद्य एव तादृशमात्मनो विकारमुपसंहृत्य धार्ष्ट्यमिवावलम्ब्य जगाद—'यद् वयं कुर्मस्तत्समीचीनमेव। न कोऽप्यत्र भवतीनां वाचामवसरः'। एवमभिधाय तत्क्षणं माधवो गृहाद् बहिः कुत्रचिन्निरगात्। वासन्ती तु तत्रैव स्थिता ललाटीं लिपिमिमाष्टुंमिवाश्रुजलमप्रहे तत्पराऽभवत्।

(५)

'समानशीलव्यसनेषु सख्यम्' इति न्यायेन दैवयोगान्माधव-

नाथस्य विटमण्डलीषु वसन्तेन सह स्वनगरे पानगोष्ठीसौहार्दमुदपद्यत। किन्तु वसन्तः 'भगिनी तिरस्करिष्यति' इति भयेन माधवनाथस्य गृहं कदाऽपि न गच्छति स्म। एकदा माधवनाथो वासन्त्या भूयो भूयोऽनुनीयमानः सकोपमभाणीत्—'प्रथमं गत्वा स्वबन्धुराजं निवर्तय। पश्चान्मामुपदेक्ष्यसि'। एतदाकर्ण्य तत प्रभृति 'कथं वसन्तोऽपि सहैवैतेषाम्?' इति द्विगुणमौनमत्यमनयोर्भविष्यतीति समधिकया चिन्तया समाक्रान्ताऽभूत्। सकलेऽपि गृहोपकरणे विक्रीते सति, शनैः शनैर्वासन्त्या आभूषणान्यपि मदिरागृहोपहारता जग्मुः। दिनद्वयादारभ्य गृहे लेशोऽपि नासीदशितव्यस्य वस्तुनः। चिरन्तनया वृद्ध्या परिचारिकया वासन्त्या अवस्थां परिकल्प्य स्वगृहात् किंचिदशितव्यमानीतमासीत्। तच्च कथमपि वासन्त्या दुस्त्यजतया बुभुक्षाया, निगीर्णम्। माधवस्तु बहोः कालादेव बहिरेव यथाभिलषितं भोजनं विधत्ते स्म।

वसन्तस्य समागमेन माधवनाथस्य स्वेच्छाचारित्वं भृशमवर्धत। प्रथमं दिवसान्तरं एकवारमपि माधवनाथो गृहमायाति स्म। इदानीं तु साप्ताहिकमपि गृहागमनं कृच्छ्रेण भवति स्म। माधवनाथस्य चरितं श्रुत्वा सपत्नीको दीनानाथशर्मा समधिकमखिद्यत। प्रथमत एव पुत्रविषयकः क्लेश आसीदेव, पुनरेतेन दुहितुर्दौर्भाग्यगरिम्णा स वव्यथे। एवमुभयतः कष्टमनुभवन् समेधमानाधिपरिपीड्यमान आत्मनो गार्हस्थ्यभविष्यमन्धकारमयमवलोक्य शयनीयमभजत। माधवनाथोऽपि स्ववपुषि बहुलदुराचारविधानेन तन्निमानमतिसूक्ष्मतया समागमत्। सलक्ष्य चैतद् वासन्ती कयाचिन्नूतनया चिन्तया दुःखसागरे आकण्ठं ममज्ज। पुरन्ध्रीणामियमेव चिन्ताऽतिदुर्विपह्या भवति।

यद्धि वासन्त्या शङ्कितमासीत्, तच्छनैः शनैः सत्यतामुपगन्तुमिव सन्नद्धं ददृशे। माधवनाथो रोगशय्याया सुष्वाप। वासन्त्याः सदाचारपरायणत्वं सकलकष्टसहत्वं च माधवनाथो न वेत्तिस्मेति न, किन्त्वात्मनो गर्वप्रदर्शनार्थमेकदाऽपि तस्या आदरं न विदधे। वासन्ती तु सकलमप्यवमानं सहमाना कदापि न खेदयामास माधवीयं मनः, वाचा कर्मणा, चेष्टयाऽपि वा।

अथैकस्मिन् दिने वासन्ती नित्यक्रमानुसारं माधवनाथमुपचरन्ती गृहकर्मणि सलग्नाऽऽसीत्। माधवनाथस्तां तादृशीमवेक्ष्य, शनकैः 'प्रिये! वासन्ति!' इत्येवं सगद्गदं शनैराकारयामास।

वासन्ती तु निद्राप्रबुद्धेव त तादृशमश्रुतपूर्वं तदीय व्याहारमाकर्ण्य साश्रुलोचना पर्यङ्कस्य समीपमागत्य तूष्णीं तस्थौ। सा तदीयाह्वानस्य प्रत्युत्तरमपि विसस्मार। माधवनाथस्तामागतामवेक्ष्य मुहूर्त्तं यावत् किमपि वक्तुं न शशाक। अथासौ मस्तकमुन्नमय्य उत्थातु प्रयत्नमकरोत्। वासन्ती झटिति तदभिसन्धिं लक्षयित्वा, स्वहस्तावलम्बेन तमुत्थाप्यास्थापयत्। अथ माधवनाथो वासन्त्या पाणिं रोगकृशे स्वपाणावादाय साश्रुनेत्रो बभाषे—'दयिते! बह्वपराद्धं मया, क्षम्यताम्, त्वादृशी गृहलक्ष्मीर्मया दुराचारेण पद्भ्यामताड्यत! धिङ्माम्! मादृशं—' मध्य एव तस्य वचनमाक्षिप्य वासन्ती 'नैवमहं नरकगामिनी विधेया' इति वचनमाभाष्य पत्युर्वदने स्वपाणिपल्लवं न्यधात्। वासन्त्यास्तप साफल्यमुपययौ, किन्तु सा रोगराक्षसदंष्ट्राया माधवनाथं रक्षितुं नाशकत्। एकस्मिन् दिने विलपन्तीं वासन्तीं परित्यज्य माधव शाश्वतं पद प्राविशत्।

वसन्तोऽपि माधवनाथस्य मरणवार्तया समुन्मीलितलोचनोऽभवत्। कतिपयदिवसानन्तरं वसन्त कथमपि साहसमवलम्ब्य स्वभगिन्या गृहमाजगाम। किन्तु तत्रत्यैः प्रतिवेशिभिरिदमुक्तं 'यत् पत्युर्मरणानन्तरमल्पीयसैव कालेन सा कुत्राप्यगमत्' इति। अथ वसन्तः खिन्नमानस पितरौ सेवमानो मनस आश्वासनाय तीर्थयात्रायै सहैव पितृभ्यां निर्जगाम। अथक्रमेणासौ हरिद्वारतीर्थं समाययौ। तत्रैकस्मिन् दिने गङ्गातीरे तेन काऽपि योगिनी दूरतः समायान्ती दृष्टा। तां च समीपमागतां सम्यग् निर्वर्ण्य सहसैव वसन्तवदनात् 'किं वासन्ति!' इत्यक्षराणि निर्ययुः। साऽपि वसन्तमवेक्ष्य 'किं भ्रातः!' इत्युक्त्वा पादयोरपतत्। अथ वसन्त आचरणमूलात्तामवेक्ष्य 'भागिनि! किमिदम्?' इत्यपृच्छत्। वासन्ती तु सहसैव विहस्याकथयत्—

'को नाम पाकाभिमुखस्य जन्तु-
द्वाराणि दैवस्य पिधातुमीष्टे'।

०

# उमा

स्वर्गीयः श्रीवृद्धिचन्द्रशास्त्री

( व्याकरणधर्म्मशास्त्राचार्य जयपुरम् )

आसीत् शारदी राका। सायाह्न एव भगवतः कुमुदिनीनायकस्य सुविपुलं वर्तुलं च बिम्बं घनीभूतः सुमनसामाह्लादराशिरिव पूर्वक्षितिजे समुदियाय। यथा यथा पश्चिमक्षितिजोपरि प्रसृता कमलिनीनायकस्यारक्ता रश्मयो गगनं पर्यत्यजन् तथा तथा कलापरिपूर्णस्य कलानाथस्य शीतलाः शुभ्राश्च कान्तिमन्तः किरणा समस्तेऽपि विहायसि यथेच्छं प्रासरन्। स्वयमानन्दाप्लावितो यथासौ चन्द्रो जगदिदमाह्लादयति चिरं च रजन्या साकं निवसति, तथैव चिरपरिणीतया पाणिगृहीत्या श्रीमत्या उमया मधुयामिनी सेवमानश्चन्द्रमौलिरपि दिवसेष्वेपु सुचिरं तस्याः सश्लिष्ट एव स्थितिमकरोत्। उभावपि हर्म्यपृष्ठे आस्तां समुपविष्टौ। तस्मिन्नेव काले कथाप्रसङ्गेन मन्दस्मितमभाणि उमया—प्रियतम, भगवत्या गङ्गायास्तरङ्गा समाह्वयन्तीव मां स्नेहेन। ते तरङ्गाः, यैः सर्वतः पूर्वं स्वदीय सुकोमल स्पर्शः प्रापितो मत्सविधे, ये द्वावां प्रणयसूत्रे ह्यबध्नन्, येषां च सविधे क्रीडां कुर्वतोः—"को जानीते निभृतमुभयोरावयोः स्नेहसारम्।" संवत्सरा व्यत्यगुर्नाथ! किन्तु तद्दिनमद्यैव व्यतिगतमिति प्रतीयते! आवाभ्यां कियत्यश्चन्द्रिकाचुम्बन: सुशान्ता रजन्य सुरसरितोऽस्या रूप्यप्रतिकासु रेणुकासु अनीयन्त। अहो, कीदृश्यस्ता समभवन् मधुरा, अद्य पुनरपि समागता सा मधुमयी शारदी सुकौमुदी। हृदयवल्लभ, चलाव, किञ्चित् कालं भगवत्यास्तस्या भागीरथ्यास्तीरे।

मन्ये, नैतद् वक्तव्यं यदुमा च चन्द्रमौलिश्चास्तां दम्पती। आसीदनयो परस्परम् अतिशयः प्रेमा। आनन्देनाचलदनयोः सुचारु गार्हस्थ्यम्। गेहेऽभूदाभ्यामतिरिक्ता केवलमर्भकद्वयी चन्द्रमौलेर्वृद्धा जननी च। सा हि निवृत्ततर्षा सती स्वकीये परिणते वयसि भगवन्तं यदुनन्दनमेवाराधयन्ती प्रायेण पूजागृह एव समयाकरोति स्म! बालकावास्तां शिशू। चन्द्रमौलेर्वेश्म वाराणस्या एकस्यां वीथिकायां विद्य-

मानमासीत्। सौभाग्यात् तस्य श्वशुरालयोऽपि तस्यामेव नगर्यां ततो नातिदूर एवावर्तत।

उभावचलतां गङ्गाया दिशमुद्दिश्य। तयोर्गेहाद्दासीद् गङ्गाप्रवाहः किञ्चिद्दूरे। समवालोक्यत जाह्नव्या जगत्पावनी जलधारा। चन्द्रिकया चमत्कृताया धवलतमवालुकाराशेर्मध्ये सुदूरं चलन्तावास्ताम्। पादतलयोः सिकतानां मृदुमृदुः स्पर्शोऽतीव सुखद इति कृत्वा उभया स्वकीयौ चपलोपानहौ गृहीतौ स्वीये करे। मध्येमार्गं चन्द्रमौलेर्मुख-कमले स्निग्धां चलापाङ्गां च दृष्टिं निक्षिपन्ती जगाद उमा—मन्मान-समराल! अस्याः सुरसरितः शर्करायाः सुकोमलः स्पर्शः कियान् खल्वाह्लादकः!

उत्तरितं चन्द्रमौलिना—चरणौ गुद्गुदयत्ययम्। हर्षातिरेको रोमाञ्चव्याजेन सञ्जायेते। जगत्पावयित्री श्रद्धास्पदमावयोरियं सुर-सरित्। अस्यास्तटे समुपविष्टेनैकाकिना मयका विचारितं प्रिये, यदावां सकलमपि वैदेशिकं परित्यज्य सुदूरे कस्मिंश्चिदेकान्ते निवसाव अस्यास्तटे, यत्रावयोः प्रेम्णो न भवेत् कश्चिदीर्ष्यालुः। यत्र भवती प्रेरणां प्रदद्यात्, अहं गीतानि रचयेयम्, उपवीणयाव गायाम्। अत्र वालुकामये प्रदेशे रजन्यां मदीया सा मनोहारिणी वीणा नानेतुं शक्या। अन्यथा वीणावादनसुखं चिरमनुभवाव। किन्तु तस्याः सुमधुरं स्वरमाकर्ण्य जना समापतेयुरिह एवेति मन्ये। तेषु बहूनामक्षिणी ईर्ष्यया भवेतां कलुषिते। को लाभः?

'कान्त!" मध्य एव वार्तायां रसभङ्गं विदधती समुवाच उमा। "अनुचितं न मन्तव्यम्। विचारयामि कदाचित् यद्यहं स्मृतिशेषतां गच्छेयम्?" चन्द्रमौलिना सुदृढमालिङ्ग्य सुचिरं हृदि प्रवेशितासौ। प्रोक्तं च तत्र, 'नहि नहि प्रिये, आवामेवमेव निवत्स्यावः।'

अन्येनैवाभिप्रायेण निवेदयामि नाथ! मन्यताम्—भवानेव कदाचित् कथाशेषतां व्रजेत्? अहमेकाकिनी जीवेयं न खलु तदा? भवतु, नश्वरेऽस्मिन् संसारे एव सम्भवति न वा?

चन्द्रमौलिना शिरश्चालनपूर्वकमुररीकृतम्। उक्तं च अघटित-घटनास्थलीभूतायामस्यां धरित्र्यां किं न संभवति प्रिये।

अस्मिन् वारे सवप्ले नकुलस्येव ते न समजायत स्वामिन्, भवतः कथाशेषतायां शोकसागरनिमज्जनं केवलं मामकीनमेव। अथवा विपत्पर्वतस्तदा मय्येव निपतेदिति कृत्वा नु?

नोमया सदृश्यो मिलन्ति सर्वत्र गुणवत्यः स्नुषा । कीदृशी भक्तिः । कीदृश सौजन्यम् । कीदृशोनुरागस्तस्या मयि । अहोऽहं महाभाग्यवती वत्स ! यस्येदृशी सुमङ्गली वधूः ।'

वाक्यमसमाप्तमेवासीत् । मध्य एव किञ्चित् कासः समायातः हिक्के च द्वे । यशोदाया शरीर निश्चलमभवत् । माता सुयाता दिव विहाय नश्वर भुवम् , सुतस्य स्वान्त व्यदीर्यत इव । आसीत् स गृहे एकल । रुदत एवैतस्य-आक्ष्णो प्रातरासीत् ।

प्रातरुमा यदा स्वगृहमायात् तदा श्वश्र्वाः पञ्चत्वप्राप्तेर्वृत्तं ज्ञात्वाऽभवदधीरा, किन्तु चन्द्रमौलेस्तादृशीं विह्वलतामवलोक्य धैर्येण त बोधयन्ती सकलमप्यौर्द्ध्वदेहिकं सुचारु तेन न्यवर्तयत् । आसीत् चन्द्रमौलिर्विमना अन्यस्मिन्नहनि । उमया चिरमाश्वासित' कथं कथमपि शरीरकार्याणि व्यदधात् । श्रद्धया मातु श्राद्धादिकं च सकलमकरोत् ।

व्यतिगत वत्सरम् । निवृत्त मातु वार्षिकं श्राद्धम् । शनैः शनैः मातृवियोगदुःखं शैथिल्यं प्राप चन्द्रमौले । कस्य खलु मातापितरौ सुचिरं तिष्ठत । एतादृशो दिवसो जीवने समायात्येव यस्मिन् मातृ-पितृवियोगजन्मा हृदयदाही शल्यतुल्य शोकविपाक सोढव्य एव । किन्तु को जानीते कस्य कीदृशः प्राक्तनसंस्कारः । मातृवियोगदुःखं हृदयान्निःसृतमेव न हि ततः प्रागेव चन्द्रमौलेरपरमिव हृदयमुमा रुग्णतामगात् । कारणान्मे किञ्चिदपि त्रासो मा भूत् हृदयवल्लभस्येति हेतोस्तया सुचिर न किमपि प्रकटित तस्मिन् ।

हन्त ! कस्मिंश्चित् सामाजिके कर्मणि तन्मयतया प्रवृत्तेन चन्द्र-मौलिना सुचिर नैतत् किमपि ज्ञातम् । पुनरप्यागता शारदी राका, गता च । जगतः सामान्योऽयं क्रमः । 'शिशिरवसन्तौ पुनरायातः', सम्यगेवोक्त भगवता शङ्कराचार्येण, 'कालः क्रीडति, गच्छत्यायुः' । न दृष्टस्ततः किमप्यवलोकयति कर्त्तव्यनिष्ठः । स वीरप्रेरितः शर इव महता सरम्भेण स्वकार्य-साधने एव भवति संलग्नः । येन केनापि प्रकारेण सामाजिकं साहित्यिकं च तत्कार्यं साफल्यमगात् तस्य । तेन सुखस्य श्वासो गृहीतः । क्लेशः फलेन हि पुनर्नवतां विधत्ते । किन्तु चन्द्रमौलेः शरीरं सततपरिश्रमेण जर्जरितमिवाभवत् । प्रतिदिनं क्षीणतां गच्छन्त्या उमायाः तनूमवलोक्य च सोऽधुना विशेषेण

चिन्तितोऽभूत्। जलवायुपरिवर्तनाय सा पितृगृहमानीता। तत्रापि तस्या स्वास्थ्यं न मार्गे समागतम् इति पुनः स्वगृहमानीता। त्रिचतुरदिवसानन्तरमेव दैवदुर्विपाकात् चन्द्रमौलेः सा, बालापत्यानि विहाय तत्रैव स्वः प्रयाता। निर्वृत्त सकलमौद्र्ध्वदेहिक तस्याः। तस्मिन्नेवाह्नि स उमायाः शयनकक्षे प्राविशत्। तत्र सर्वाणि वस्तूनि व्यवस्थया सन्ति रक्षितानि। एकं स्वीयं छायाचित्रमपि तत्रावालोकितम्। उमया चित्रमिदमेकेनागन्तुना चित्रकारेण निर्मापितम्। आसीत् भावपूर्णं तत्। तस्मिन् यूथिकासुमनसां विम्लानैका माला विराजते। तस्य चित्रस्य पार्श्वे उमाया मुद्रयाङ्कितम् एकं पत्रं समाप्तम्। चन्द्रमौलिना तदाश्चर्येण स्वकरे गृहीतम्। तदुपरि लिखितमासीत्—श्रीमतश्चन्द्रमौलेः करकमलयोर्मिलिन्दायतामिदम्। चन्द्रमौलिना विचित्रेण भावावेशेन समुद्घाटितं तत्। उमाया सुन्दराक्षरैस्तत्रेदं लिखितमासीत्—

प्रियतम,

उमेयं भवतश्चिराय वियुज्यते। मामाह्वयन्ति देवदूता। नाहं चिरं प्राणान् धारयिष्यामीति सुदृढो मे विश्वासः। गच्छामि नाथ, यादृशो मयि भवतोऽतिशयित प्रेमा तमहं सम्यग् जानामि। यावच्छक्यं निर्वोढव्य स। मत्सम्मुखे कृता प्रतिज्ञा न त्वया विस्मर्तव्या। किमधिकं वच्मि। अहमुमायाश्चिरं तारुण्यं तस्या सदैकरस सौन्दर्यं च भवते समर्प्य गच्छामि। विश्वसिमि, भविष्यति भवदीये नेत्रे वलीपलितयुक्तं त्रुटितरदनं कान्तिहीनं च उमाया वदनं न कदापि विलोकयिष्यतः। ममायं प्रेमा, ममेद शाश्वत यौवनञ्च भवन्तं कर्त्तव्यपथे प्रेरयिष्यति, विनम्रं विनिवेदयामि नाथ त्वया एतस्याः प्रेरणाया न विधेयमवहेलनम्। न कदाचिद् मनसि समानेय यन्मध्येमार्गे मां परित्यज्य पलायितेयमुमा। स्वामिन्! भवतोऽन्तिमं मे मानसिकालिङ्गन ममान्तिमोऽयं प्रणाम।

भवदीयैव—उमा

असकृत् अक्ष्णोरश्रुधाराः संप्रोञ्छ्य चन्द्रमौलिना पत्रं समापितम्। ततस्तद्करात् तत्स्खलितम्। उपविष्ट स तस्यास्तस्मिन्नेव पर्यङ्के। तस्य स्वान्तं शून्यमिव समजायत। हृदयगतेरवरोधं स तन्मयतया प्रत्यैक्षत। स पाषाणमूर्तिरिव निर्निमेषाभ्यामक्षिभ्या

पश्यन्नास्त। कियत्कालपर्यन्तं स तत्रैवमुपविष्ट इति कः कथयितुं शक्तः। सायमभवत्, रात्रिरागता किन्तु संभाव्यते स तथैव चिरं निश्चेष्टमुपविष्टः। तस्याश्रूणि शुष्काणि, हृदयं काष्ठतामाप। एकैकशः कानिचिन्मित्राणि समागतानि, तस्यां विचित्रायां परिस्थितौ तमवलोक्य तूष्णीमेव तत परावृत्तानि। चिररात्राय स तथैवोपविष्टो न जाने कदा निद्रादेव्याः शरणमगात्। अपरेद्युः महामहान्तो गुरवः संप्राप्ताः। धैर्यधारणस्योपदेशं दत्त्वैव प्रतिनिवृत्ताः। समाचारपत्रेषु समवेदनां प्रकटयितुं शोकप्रकाशकानाम्—"नव एव वयसि बालापत्यानि विहाय चन्द्रमौलेः पत्नी दिवं गतेति दुःखास्पदम्" प्रकाशमागता टिप्पणी। सुदूरदूरत शोकं प्रकटयितुं प्राप्तान्यनेकानि पत्राणि तेष्वेकतमे इदमपि लिखितमासीद् यदधुना त्वया मातृत्वमपि निर्वाह्यम् इति।

अन्येद्यु प्रातरुमाया जननी समायाता! तया विलोकितम् चन्द्रमौलिः किञ्चित् प्रकृतिस्थः किन्तु चिन्तामग्न इवास्ते। तया पृष्टं वत्स, कीदृशी खलु मानसिकी परिस्थितिः।

मातः! सर्वथा स्वस्थोऽस्मि। उमया यत्कार्यं मयि निहितं तदेवाहमधुना विधास्यामि। मया न कदापि चिन्तितं न चावबुद्धं यदीदृशः पटाक्षेप स्यान्जीवने मे। किन्तु अजानादुमा। तया मम कर्तव्यं चिरपूर्वमेव निरधार्यत। उमया नात्महननम् अपि त्वात्मदान वितीर्णमस्मै जनाय। आम्, तदात्मदानमात्महत्यायां परिणमयितुं शक्यं किन्तु एव कृते विश्वासघात कृतघ्नता च मच्छिरसि समायाति। अतो नैवं करिष्यामीति मे विनिश्चयः।

उमाया मात्रा चन्द्रमौलेरात्मभाव परिज्ञातः। सा किञ्चित् तूष्णीकातिष्ठत्। न जाने किम्, चन्द्रमौलिरकस्मादुत्थित स्वस्थानात्। श्वश्रूः शनैः पृष्टवती क्व गम्यते वत्स! उमां विलोकयितुमित्युत्तरितं तेन। अहमपि त्वया सह चलिष्यामि चन्द्र। कदाचित् ममापि सा नयनपथगामिनी भवेत्। इति वदन्त्या एव तस्याः कण्ठावरोधः समजनि। नेत्राभ्यामश्रुधारा निरगलन्। चन्द्रमौलिर्गृहान्निःसिर्तुमियेष परं माताऽब्रवीदुमायाः, वत्स न कुत्रापि दृष्टिपथे समायादुमा। मौले, वैक्लव्यं त्यज, धृतिं बधान। किं व्यस्मार्षी प्रतिज्ञामेकपद एव।

'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः !' किमियं कालिदासभणितिर्न स्मर्यते त्वया।

जागरणमिव समजनि चन्द्रमौले। उपविष्टः स पुन स्वासने। किञ्चित्कालं स्थित्वा जननी उमाया· स्वगृहान् प्रति न्यवर्तत। चन्द्रः स्वस्थवत् सकलानि करोति शरीरकार्याणि, किन्तु कान्तागृहीतमनस, मनसोऽस्ति दैन्यम। तद्दैन्य कः कथं दूरीकुर्यात्।

विमनाः स कदाचित् कलानिधिमवलोक्य चिन्तयति "श्रूयते किल "मनश्चन्द्रे निलीयते।" प्रियाया मे मन सत्यमत्रैव निलीन स्यात्। मन्ये, तद् गृहीत्वैवायं जगदाह्लादयति स्वयं च चन्दति। किन्तु हन्त, कथ मामय न प्रसादयति ? आम् ज्ञातं, न मे कान्ताया कान्तं स्वान्तमत्र कलङ्किनि कलितम् ,अन्यथा कथमयं मा न कलयेत्। तत् किं श्रुतिरपि स्वप्रामाण्यं परित्यजति, कोयं व्यामोह ? न हि न हि, अत्र महाकवे श्रीहर्षस्य दृष्टिकोणस्तथ्यतामावहतीति मन्ये। "तस्या किल श्रुतिमाह तदर्थिका प्रियमुखेन्दुपरा विबुधः स्मर।" सत्य तदेव जातम्। उमाया मनो मय्येव न्यलीयत। अन्यथा कथं मे स्वस्थवृत्त संभाव्येत। किन्तु रे कलङ्किन्, कुत्सितस्वान्त, कतीना पुन· सतीना चित्तमनुकूलयितु त्वया न चेष्टितम् ? परं कथय रे कथय कुत्र कुत्र साफल्यमवाप्त त्वयका ? "सतीव योषित् प्रकृति सुनिश्च-ला पुमांसमभ्येति भवान्तरेष्वपि।" किमिद सिद्धान्तवाक्य त्वया विस्मृतम् ? मम मनो यातं, सुदूरे यातम्। न जाने क्व यातम्, यातु नाम। निश्चितं पुनरायास्यति, वृद्धिं गृहीत्वा आयास्यति। पर पृच्छामि रे तव हस्तेऽनेन किमायातम् ? स्वयमेवायास्यते। अनेन कल्मुषकर्मणा तव जडत्वमेव प्रत्यक्षं मयकानुभूतं दौरात्म्यं चेति—न जाने स कतिधा कतिवारमुपालभत भगवन्त जगदाह्लादक शशिनम्।

कदाचिदेकान्ते समुपविष्टः सोऽनुभवति यत्तस्य हृदयं स्फुटतीव। विना हि मृगशावाक्ष्यास्तमोभूतमिवेदं जगत् परिलक्ष्यते। अन्तरात्मा तस्य घोरान्धकारे निमज्जतीव। किन्तु हन्त, मन्दभाग्यो वराकः स किं विदध्यात। शोकसागरे मग्नस्य तस्य परिस्थितिमवलोक्य स्मृति-पथमायान्ति महाकवेर्भवभूतेः शोकसन्दीपनान्यक्षराणि—

हा हा देवि, स्फुटति हृदय ध्वसते देहबन्ध,
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।

सीदत्यन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि ।

किं बहुना, शून्ये स्थाने विकलकरणैस्तस्य तैस्तैश्चरितैः —मन्ये—

"अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।"

धन्यासि उमे, धन्यासि यया गुणैरुदारैरेवं समाकृष्यत चन्द्रमौलिः ।



# विधानभङ्गः

विद्याभूषणः श्रीगणेशरामशर्मा,

( साहित्यरत्नम्, राजस्थाने झालावाडवास्तव्य, संस्कृते विश्वानन्दसर्वेष्वग्रतमः )

सायंतन समयः। पश्चिमाशाक्षितिजे सूर्यनारायणो भगवान् अस्ताचलं प्रति मन्दं मन्दं गच्छन् वर्तते। मन्दशीतलसुगन्धयुक्तो वायुः समन्ततः प्रवहन्नास्ते। वनप्रान्तेभ्य समागच्छतां गोमहिषाजादीनां खुराघातैः समुद्धूयमाना रजोरेणवः कर्बुराकारं तमस्तोमं विदधाना नभोमण्डलं स्पृशन्त इव व्याप्नुवाना वर्तन्ते। गोचरभूमिभ्यो गोपालाः पशूंश्चारयित्वा वेणुवाद्यानि वादयन्तः ग्रामोपसीम्नि हसन्तो नृत्यन्तो विनोदपरिहासांश्च कुर्वाणाः स्वगृहाभिमुखं व्रजन्तो विद्यन्ते। सरस्सु, सरित्सु, वृक्षाग्रेषु, पर्वतशिखरेषु च सूर्यकिरणाः क्रीडन्त इव कामप्यपूर्वामेवारुणाभां शोभां प्रसारयन्तो विराजन्ते। सर्वत्रापि धरणीतले सायंसन्ध्या प्रोज्ज्वलन्तमीषद्रक्तप्रकाशपुञ्जं प्रक्षिपन्तीव रमणीयतामाविष्कुर्वाणास्ते। क्रमशः पश्चिमसमुद्रे निलीयमाने सूर्यबिम्बे नीले नभसि क्वचित् क्वचित् स्थूलस्थूलास्तारा अल्पाल्पां स्वतेजोद्युतिं विकिरन्ति। यद्यप्यद्य पूर्णिमास्ति, तथापि नेदानीं यावच्चन्द्रोदयः सञ्जातस्ततो हि सर्वासु दिक्षु घनान्धकारः प्रसरन् वर्तते। नदीतटाग्रजलेषु नीलिमानमुद्वहन्तस्तरङ्गा एकमनुद्वितीयमुत्तिष्ठन्ति, तटभूमौ विलीयन्ते च। पक्षिणो दूरदूरतो नीडान् प्रति समुड्डीयमाना कलमधुरमालपन्तो मनोहरं सङ्गीतं गायन्ति। सर्वतः प्रशान्तं वातावरणं भव्यं दृश्यमुपस्थापयति।

एवंविधे हि समये केचन ग्रामीणा ब्राह्मणजना ग्रामोपकण्ठं सकलकलं प्रवहन्त्या नद्यास्तीरे निषण्णा मिथो वार्तालापान् कुर्वन्तो हासपरिहासविनोदैर्मोमुद्यमाना दृश्यन्ते। तस्याः किल नद्याः सैकतपुलिने शिलायामेको युवा ब्राह्मणस्त्वहिफेनगुटिकायाश्चूर्णं कृत्वा ताम्रधातुविनिर्मिते एकस्मिँल्लघुपात्रे वस्त्राञ्चले चूर्णं निक्षिप्य तदुपरि क्रमशो जलबिन्दून् पातयन् तन्निर्गालयन्नास्ते, एकतोऽन्यो ब्रह्मचारी

द्रोहपरायणानां जल्पाकानामाक्षेपवचनेषु ? ननु साध्विदमुक्तम्—
'अनु हुङ्कुरुते घनध्वनिं, न तु गोमायुरुतानि केसरी ।''

दीक्षितः—'ग्राम्यक्षेत्रीयास्तु सर्वेऽस्मासु समर्यादं व्यवहरन्ति, परन्त्वेते राजाश्रिता नागरिकाः केचनात्मानं सभ्यम्मन्या यदा कदा मन्वौद्धत्यं प्रकटयन्ति, राज्याश्रयबलात्ते गर्वायन्ते चापि; यतस्ते राजधानीमधिवसन्ति, नृपसभासदस्यत्वात्तत्सम्पर्कं चासादयन्ति । पुनर्नवशिक्षाप्रचारात्ते ह्यांग्लविद्यासु व्युत्पन्ना अस्मत्स्वत्वे ग्रामीणतादोषमाशङ्कन्ते !'

द्विवेदः—'किं स्यादेभिः केषांचिन्मुष्टिमेयानां नगरवासिनां राजाश्रयमात्रबलादुद्धतानामाक्षेपैर्दोषोद्भावनाभिर्दुरुक्तैश्च ? सर्वमपि ज्ञातिमण्डलमस्मदधीनमेव चेष्टते । यदि चेमे कतिचन नागरा ज्ञातिविधानं, तन्मर्यादां, तन्नियमांश्च नो बहुमन्यन्ते, तमाक्षिपन्ति, तिरस्कुर्वन्ति, अवगणयन्ति चेत्तदा कृतापराधाः प्राप्तकालं नूनं दण्डनीया स्युः ।'

दीक्षितः—'का दण्डस्य वार्ता ? ते तु सर्वमपि च ज्ञातिसमाजविधानं तृणाय मन्यन्ते । न दृष्टं किं भवता, तदा, तेनोपाध्यायापसदेन गतवर्षे सर्वजनसमक्षं यदस्मान् प्रति दुरुक्तम् ? यदि भवन्तोऽत्र विषयेऽवधानं नार्पयेयुस्तदा श्रीमतामेवतत्स्वत्वं संकटग्रस्तमेव मन्यताम् ।'

द्विवेदः—'निश्चिन्तैर्भूयताम् ! अस्पृश्यप्रायाणाममीषामकुलीनानामुपाध्यायवराकाणां प्रलापापजल्पनैः किं स्यादस्माकमहितम् ? ते तु शृगालाः सिंहैरिवास्माभिरेकदा नूनं हन्तव्या एव । अस्तु तावत्, निपीयतामेष सुसिद्धो हि भंगारसः । अहमपि चाहिफेनरसमार्पीय चषकैः, शौचस्नानादिकं करोमि । अद्य तावन्नगरे ज्ञातिभोजनप्रसङ्गः । तदस्माभिस्त्वरितमेव तत्र गन्तव्यम् ।'

दीक्षितः—'गन्तव्यं तु वर्तत एव, परं यावद्वयं न गच्छामस्तावत्तत्र न किमपि कृतं स्यात् । अस्मासु तत्र गतेष्वेव हि भोजनादिकं प्रारप्स्यते ! वयं च पुनश्चन्द्रवंशीयाः । 'सोमोऽस्माकं ब्राह्मणानां राजा' इति वेदवचनम् । यावद्भिन्नभिन्नग्रामेभ्योऽन्येऽपि च सर्वे ज्ञातिसदस्या नगरं गच्छन्ति तावद्वयमपि तत्र प्राप्स्यामः ।'

इत्येवंविधान् वार्तालापान् कृत्वाहिफेनरसं, भंगारसं च पीत्वा ते सर्वे शौचस्नानादिकं कृत्वा सायंसन्ध्यामुपास्य मार्गमनुलग्नास्तावदेव

पूर्वस्यां दिशि चन्द्रोदयः समभूत्। चन्द्रज्योत्स्नाधवलिते पथि ते मिथो नानाविधान् वार्ताप्रसङ्गान् कुर्वन्तः शनैः शनैर्गन्तुमुपक्रान्ताः। यावत्ते स्तोकमध्वानमतिलङ्घन्ते, तावन्मध्येमार्गं क्वचित्तमालपत्रचूर्णं भक्षन्ति, क्वचित्पूगीफलचर्वणं कुर्वते, क्वचिज्जलं पिबन्ति, क्वचिदुपाश्रित्य मार्गजनितखेदापनोदनाय विरमन्ते। यदा कदा मार्गे चलन्तोऽपि च काव्यालापान् समालपन्ति। क्वचित् ज्ञातिसम्बन्धिनां नव्यानां पुरातनानां च विषयाणामालोचं प्रत्यालोचनं च कुर्वन्तो मिथो मोदमाना गच्छन्ति। इत्थं चेष्टमानास्ते क्रमशो मार्गमतिलङ्घन्ते।

अथ नगरोपकण्ठं सरोवरस्य पश्चिमतटे सुविस्तृताया भूमावेकं ब्राह्मणसमाजस्य सुविशालं भव्यं ज्ञातिभवनं सुप्रतिष्ठितमास्ते। तत्राद्य कस्यचिद् गृहस्थस्य नागरिकब्राह्मणस्य पुत्रविवाहोत्सवनिमित्तं ज्ञातिभोजनस्य माङ्गलिकं प्रकरणं वर्तते। ब्राह्मणसमाजस्य तस्य सर्वेऽपि पुरुषाः स्त्रियो बाला बालिकाश्चाबालवृद्धं समवेता विद्यन्ते। अधुना स एव रात्र्याः प्रथमप्रहरस्य समयो वर्तते। गृहपतिना सर्वेऽपि च भोजनोपयुक्ताः पदार्थाः स्वगृहादानीय भोजनशालाया अस्या कोष्ठे सस्थापिता सन्ति। जलभरितानि महाभाण्डानि, पत्रावल्यः, इन्धनानि तथान्यान्यानि तानि तानि वस्तूनि यत्र तत्र प्रयत्नात् सरक्ष्य स्थापितानि ध्रियन्ते। केचन ज्ञातिवृद्धाः पुरुषा वत्सक्षमा युवानश्च कृतस्नानाः कौशेयवस्त्राणि परिदधाना अग्निमुखं कृत्वा भोजनारम्भाय सन्नद्धा इतस्ततः उपविष्टाः सन्ति। केचन किशोराः भोजनशालाया अस्या सुविशाले प्राङ्गणे क्रीडाकूर्दनानि कुर्वन्तो धावन्ति, खेलन्ति, हसन्ति च। महिलाः बालाः किशोर्यश्च वस्त्रालङ्कारपुष्पप्रसाधनैः शृङ्गारशोभां दधाना सतालस्वरं वृन्दनृत्यं कुर्वाणा कमप्यनिर्वचनीयमानन्दमाह्लादं सुखं चानुभवन्त्यो गायन्त्यः दत्तरमितमुद्यापयन्ति। कतिचन युवानः सरोवरे स्नानमाचरन्तो जलक्रीडां कुर्वाणा हासपरिहासवार्ताविनोदैः काव्यकथालापैश्च मोमुदमाना शोभन्ते। वरराजो वधूश्च वस्त्राभरणैः पुष्पमालादिभिश्च शृङ्गारसज्जां कृत्वा तत्रैव शालाया मध्यभागे स्थितौ स्तः। द्वारदेशे दुन्दुभयो ध्वनन्ति, नानावाद्यैः सह सङ्गीतस्वरलहरी सर्वतः प्रसरन्ती कर्णपुटेषु सर्वेषाममृतमिवापूरयति। ज्ञातिभवनस्यास्य स्तम्भेषु तोरणेषु द्वारेषु भित्तिषु गवाक्षेषु च यत्र तत्र सर्वत्र जाज्वल्यमाना दीपमाला भास्वरं प्रकाश

विकिरन्त्यो विराजन्ते। सर्वत्राह्लादमयमानन्दपूर्णमिव वातावरणं दरीदृश्यते।

सत्यप्यानन्दमङ्गलमयेऽस्मिन् हर्षप्रसन्नमये समये वरकन्यापक्षयो कुलवृद्धानां तत्सम्बन्धिनां च मनसि काप्यन्तर्गूढा चिन्तेव परिलक्ष्यते। अमीषां सर्वेषां हितचिन्तकानां मुखाकृतिषु किमपि वैवर्ण्यं पारतन्त्र्य-दुःखमिव घनीभूतं विलोक्यते। सर्वेऽपि च ते कस्यचित् प्रतीक्षायां कृतेक्षणा इव विषण्णा इव दृश्यन्ते। तदानीमेव दीनानाथो नाम वरपक्षस्य कुलवृद्धो विवशतामात्मनः प्रच्छादनेऽसमर्थ इव सर्वानपि पञ्चपरमेश्वरान् प्रोच्चैः सम्बोध्य निवेदयति—

अयि भो! सम्माननीया पञ्चपरमेश्वराः! इदानीं प्रहरप्राया रात्रिर्व्यतीयाय, परन्तु नाद्युनावधि द्विवेददीक्षितादयो ज्ञातिसम्मानिता वरिष्ठा पञ्चमहाशया समाजग्मु! तदधुना कियत्पर्यन्तमस्माभिः सर्वैस्तत्प्रतीक्षणपरैर्भाव्यम्? यावत्ते नायान्ति तावत् भोजनसिद्धिः कथं स्यात्? इदानीमत्र सर्वे जनास्तानेव प्रतीक्षमाणाः कालं क्षपयन्तः सन्तिष्ठन्ते। बुभुक्षया पीड्यमाना बालास्तरुणा महिलाश्च दुःखिताः सन्ति। आज्ञाप्यताम्, इदानीं किमस्माभिः कर्तव्यम्? श्रुत्वैतत् पञ्चसमूहमध्यादेको वृद्धजनोऽब्रूत—'यद्यपि भवतोक्तं सर्वं सत्यं तथ्यं च, परन्तु यावद्वरिष्ठाः पञ्चसदस्या नायान्ति तावद्वयं किं करवाम? तेष्वागतेष्वेवात्र भोजनपचनसमारम्भो भवितुमर्हति, नान्यथा! तत् कश्चित् कालः प्रतीक्ष्यताम्! ते आयन्त एव भवेयुः। क्षणादेवागमिष्यन्ति!'

कश्चिदन्यो वृद्धोऽवदत्—'अयं तु परम्पराप्राप्तो ज्ञातिविधानान्त-र्भूतो नियमो यद्धि समागतेष्वेव द्विवेददीक्षितादिषु ज्ञातिमूर्धन्येषु वरिष्ठपञ्चेषु ज्ञातिभोजनारम्भो भवेदिति। समागतेषु तेषु सर्वं सौकर्येण सम्पत्स्यते। तद्भवद्भिर्नात्र विषयेऽधीरैश्चिन्ताकुलैर्भाव्यम्!'

अथान्यः कश्चिद् बभाषे—'मान्याः किमर्थमेतावानाक्षेपोऽयं कोलाहलश्च क्रियते? यथा सर्वेषां ज्ञातिजनानां गृहेषूत्सवाः समुद्या-प्यन्ते तथैवात्रापि चोत्सवोऽयं भवेत्। यावद् द्विवेददीक्षितादयो नागच्छन्ति तावत्त्वरया कृतयापि किं फलं स्यात्।'

कश्चिदपरो बभाण—'नायं क्रमः शोभनः! द्विवेददीक्षितादयः किमिति झटित्येव यथासमयं नायान्ति? किमर्थं च ते दीर्घसूत्रितामा-

तन्वते ? तेषां विलम्बेनागमनाच्छतशो ज्ञातिसमाजसदस्याः क्षुत्क्षामकण्ठा भृशं पीड्यन्ते ! यदि ते समयात् पूर्वमेवात्रायायुश्चेत्तदा का हानिस्तेषाम् ?'

अथ कश्चित्प्रौढवया गृहस्थोऽब्रूत—'अयि भोः ! एते किल द्विवेदा दीक्षिताश्च वरिष्ठाः पञ्चा अस्मज्ज्ञातिजनानां नेतारो नायकाश्च मूर्धाभिषिक्ता राजान इव प्रजानां पितरो वर्तन्ते । ते सर्वेऽस्माभिः सर्वैः सम्मान्या एव, यतस्तेषां पूर्वपुरुषैर्महत् पुण्यमुपार्जितम्, महांस्त्यागो विहितस्तपस्तप्तम्, ज्ञातिभ्यो दानानि समुत्सृष्टानि, सर्वस्वमपि तैर्ज्ञातिभ्यः समर्पितवन्तस्तत एव हि तेषामियं वरिष्ठता परम्परागताद्यापि चाक्षुण्णा प्रचलति । न पुनरियं तद्वरेण्यतास्माभिर्नागरिकैरेव परिपाल्यते परञ्च ज्ञातिसमाजस्य समस्तापि समष्टिस्तेषामिदं सम्मानं सदा सर्वत्र संरक्षति । ततोऽत्र विषये नास्माभिः किमपि वक्तव्यमापत्तिर्वा विधेया । नो चेद्वयमशेषस्य ज्ञातिसमुदायस्य कोपभाजो भविष्यामः । विशेषतोऽस्मिन् मङ्गलसमये विवादप्रसङ्गे माभूत्कोऽपि कलहकषायोद्घोषः । स्वगृह एव यदा शुभकर्मारम्भो भवति तदा सर्वैरपि सहनशीलैर्भवितव्यम् । क्षणं प्रतीक्ष्यताम्, परिणामे सर्वं शोभनमेव स्यात् ।' ततः कश्चिदन्यो जनः प्राह—'य इमे द्विवेदीदीक्षितादयो वरिष्ठा ज्ञातिनेतारो न केवलमत्रैव विलम्बन्ते प्रत्युत प्रायः सर्वत्रैव कार्यकाले विलम्ब्यायान्ति, आयाता अपि निर्निमित्तं कालक्षेपं कुर्वन्ति, पुनर्यदा कदा दुर्वचनान्यपि च ब्रुवन्ति । नैतत्सर्वं तच्छिष्टानुरूपम्, नैष भोः, कुलीनानां क्रमः, न चैषा महतां मर्यादा ! दृश्यताम्, अद्यैव त एतेऽधुनापर्यन्तं नागताः । सर्वेऽपि च ज्ञातिजनास्तानेव प्रतीक्षमाणाः पीड्यन्ते ! अप्येतदुचितम् ?

उपाध्यायवृद्धः—'यूयं सर्वे भीरवः कातरा मूर्खाश्च नागरिकाः स्थ ! नो चेत् कथमेवंविधमनुचितमाचरणं तेषां नायकत्वं पूज्यत्वं वरिष्ठत्वं च स्वीकुरुथ ? अथ द्विवेदीदीक्षितादीनां पूर्वजैर्ज्ञातीनां सेवाकृत्यं कृता स्यात्, परं तत्फलरूपा सम्मानता तु तेषां वंशजैः सप्तपुरुषपर्यन्तमिदानीं यावदुपभुक्ता । अधुनापि यूयं तान् ज्ञातिनायकान् पूज्यतमानेव मत्वा तेषामादरं सत्कारं च कुरुथ, परन्त्वेतेऽस्य सत्कारस्य क्रियन्मात्रत्वमावहन्ति, न तन्मे मनो यथार्थतो वेत्तुं प्रभवति । अन्यः कश्चिदुवाच 'अरे ! त इमे ज्ञातिशिरोमणयः स्वपूर्वजानां पुण्योपचयैः समाजे सर्वसदस्यैः पूजिता अपि च गर्वायन्ते, दुर्भाषणं कुर्वते, स्वेच्छाचारं च

तन्वते ! नन्वीदृशैर्ज्ञातिनायकैः किं हितं साधितं स्यादस्माकं सर्वेषाम् ? एवंविधैरकर्मण्यैरलसैरशिक्षितैरसभ्यैरशिष्टैः समाजस्य का गौरववृद्धिः स्यात् ? किमेतैर्ग्रामीणैर्ज्ञातिसमष्टिः स्वस्तिमती भवेत् ? कां सिद्धिमासादयन्ति नन्वीदृशैर्नेतृपदवाच्यैर्ज्ञातयो नाम ? अद्य च ननु मध्यरात्रप्रायः समयोऽत्यवर्तत परन्तु ते नायाताः ! कीदृशमसह्यमेतन्नायककृतं दुःखम् ? का वासौ रूढिवादविडम्बना ?'

एको युवा—'अयि भो ! दीक्षितद्विवेदादयो ह्यमी ज्ञातिप्रधाना अखर्वगर्वोद्धता सर्वानस्मान् स्वक्रीतदासानिव मन्यमाना यथेच्छमन्याय्यमाचरन्ति । बालिशत्वं त्वेतेषां नन्विदं यत्ते प्राय सदा लोकान् पीडयन्त्यकारणम् । यदि ते यथासमय ज्ञातिसम्मेलनोत्सवेषु न गच्छन्ति सदा कार्यनिर्वाहः कथं स्यात् ? कथं चेदमाबालवृद्धं ज्ञातिजनानां सर्वेषां भोजनावरोधदुःखं निवर्तेत नाम ? तस्य कोऽप्युपायश्चिन्त्यताम् । नो चेन्निखिलामपि रात्रिं यावत्तान् प्रतीक्षमाणास्तिष्ठन्तु भवन्त.! स्वनायकानामागमनप्रतीक्षणमेव हि परिपालयन्तु, विचित्रमेतद्दासत्वम् ।'

उपाध्याय —'महाशयाः! मध्यरात्रोऽपि च व्यतीयाय ! परं द्विवेददीक्षितादयो नायाता , नायाता , नैवायाताः !! तदधुना किं कर्तव्यमस्माभिः ? यदुचितं तदेवोच्यताम् ।'

एको वृद्ध :–'भोजनपचनायारम्भस्तु तावत् क्रियताम् । समागतेषु द्विवेददीक्षितादिषु तेभ्यः क्षमां याचिष्यामहे । अन्यो नास्त्येवाभ्युपायः । सर्वेऽपि च ज्ञातिजा बुभुक्षया पीड्यमाना सन्ति, बालकबालिका निद्रावशमुपगता., स्त्रियश्च सर्वे शिशवश्च कामपि दयनीयां कष्टां दशामनुभवन्त्यधुना । तत्कार्यारम्भस्तु क्रियतामेव ।' एकः प्रौढवयाः पुरुषः–का हानि , यदि भोजनारम्भः क्रियेत् ?'

अन्यः कश्चित्—न ज्ञायते, ननु किं कारणम् , यद्दीक्षितादयोऽधुनापर्यन्तं नायाता ? कदाचिन्मध्येमार्गं कामप्यापत्तिं गताः स्युरथवा व्याघ्रभल्लूकादिभिर्हिंस्रपशुभिः प्रतिरुद्धा भवेयुस्ताहोस्विच्चौरलुण्टाकादिभिः परिमुषिता स्युः, किं वाकस्माद्रोगाक्रान्ता कृच्छ्रप्राप्ताः स्युर्नो चेत्कथमेतावद्दीर्घं समयं विलम्बन्ते ? मन्ये, कस्माच्चिद्धेतोरिमे नूनं महतीं विपत्तिं गता । भगवानेव जानाति तत्त्वतो भूतार्थम् । तत् प्रारभ्यतां तावद्भोजनसिद्धये प्राथमिकमावश्यकं कार्यजातम् । परम् 'उपाध्यायस्य गृहादेवायं मानभङ्गोऽजायत वरिष्ठपञ्चानाम्' इति महान् वतापवादः । अस्माद् दुर्निमित्ताद्यदि रक्षन्ति ज्ञातयोऽस्मान्

तदा वयं तु भोजनकार्यारम्भे कृते न कमपि दोषं पापं वा सम्भावयामः।'

केचन युवानः प्रोचुः—'वयं तु सर्वेऽस्मिन् मन्ये, सुविकसिते विज्ञानयुगे द्विवेददीक्षितसदृशानां मूर्खाणां ग्रामीणानामशिक्षितानाम् सभ्यानां तदेतन्नायकत्वं तन्त्रान्धपरम्परानुसरणमज्ञानविजृम्भितमेव मन्यामहे। अयं हि प्रचण्डो यत रूढिवादः। गड्डलिकाप्रवाहमात्रमेतत्सर्वम्। ज्ञातिसमष्टौ सर्वेऽपि सदस्याः समानसम्मानाधिकारमर्हन्ति। कस्याप्येकस्य वर्गविशेषस्यैकाधिकारो न न्याययुक्तो भवितुमर्हति। एकस्य द्वयोर्वा सदस्ययोरपराधात् सर्वेऽपि च ज्ञातिसभ्या अकारणं क्लेशक्लिष्टाः सन्तो भूयो भूयः पीड्यन्ते, नैतत्कथमप्युचितम्। तदाज्ञापयन्तु, सर्वं भोजनं पचाम। यदि तावत्पर्यन्तमिमे ज्ञातिपूज्यास्तथाकथिता वरिष्ठाः पश्चादायान्ति चेत्तदा शोभनमेव, नो चेत् वयं सर्वं पक्त्वा भुक्त्वा च स्वगृहं व्रजाम। अन्यत्किम्?'

इत्थं विवदमानानां तेषां सर्वेषां बहुमतेन तैः सर्वभोजनं परिपक्वम्। भोजने समिद्धेऽपि ते वरिष्ठाः पश्चान्नाजग्मुस्तदा सर्वे ज्ञातयो भोजनपदार्थान् पत्रावलीषु परिवेष्य सुखेनातृप्ति भुक्त्वा स्वगृहान् प्रविष्टाः। सर्वेषु गतेष्वपि यदा ते द्विवेददीक्षिताद्यो नैवायातास्तदोपाध्यायोऽपि च कंचित् कालं प्रतीक्ष्य ज्ञातिभवनात् स्वगृहं प्रतस्थे। अधुना रात्र्याः पूर्वार्धप्रहरस्य समयो व्यतीयमानोऽभूत्।

रात्र्याश्चतुर्थप्रहरस्य समयः। रामनाथदीक्षितो भानुदत्तद्विवेदस्तथा तयोः सहचराश्च केचन ब्राह्मणाः नगरं प्रविश्य श्रान्ताः क्लान्ता सरोवरस्य तीरभूमिं समाजग्मुः। तत्रागत्य क्षणं विश्रम्य मुखमार्जनगण्डूषादिकं कृत्वा, हस्तपादं प्रक्षाल्य, वस्त्रवेषादिकं सुव्यवस्थितं विधाय स्वजातीयानां ज्ञातिभवनस्य द्वारदेशमनुप्राप्ताः। तत्रागत्य यावत् पश्यन्ति तावत्तस्या भोजनशालाया बृहद्विशालं च गोपुराकारं द्वारमावृतकपाटं दृष्ट्वा तेऽत्याश्चर्यमन्वभवन्। क्षणमेकं ते सर्वेऽपि चकितचकिता विस्मिता आश्चर्यसन्देहाशङ्कादिनानाभावतरङ्गैरालोडिताखिलचित्तवृत्तयो विभ्रान्ता उद्भ्रान्ता इव किंकर्तव्यविमूढाः कान्दिशीका इतानिच्छन्तोऽपि प्रसह्य कयाप्यज्ञातशक्त्या प्रेरित इव तत्रैव द्वारपार्श्वयोस्तस्थुः।

कंचित् कालं ते तत्र जडा लज्जा निष्पन्दा निवशा इव स्थित्वा परस्परं मुखावलोकनं कुर्वाणास्तूष्णीमुपाविशन्। ततो भानुदत्तो

दीक्षितो रामनाथं द्विवेदं मन्दगम्भीरेण नैराश्यपूर्णेन स्वरेणावोचत्: 'किमिति भो ! सैषा भोजनशालास्माकमद्यावृतकपाटास्ते ? कदाचिद्वय भोजनदिवसतिथिं विस्मृताः ! स्मितद्वौ ! न कोऽप्यत्र सजातीयः समधर्मा जनो दृष्टिपथमायाति ?'

रामनाथ —'अयि, भो ! किं वयं बालका स्मो यद्भोजनतिथिमेव विस्मृतवन्त । स्वशिरसि वद्धादुष्णीषात् पश्चाङ्ग नीत्वा तिथिवारादिकं तथामन्त्रणपत्रं च दर्शयति, तिथिस्तु तावत् सैवास्तेऽद्य पूर्णिमा । न वय तिथिं विस्मृता स्म ।'

तावदेक शिष्यो ब्रवीति—'किं न पश्यन्ति भवन्तो यदत्र द्वारसमीपे भोजनोच्छिष्टा पत्रावल्यस्तथा च द्रोणानां राशिरुच्चाररूपो निपतितोऽस्ति । तस्मादेवैते श्वानो गर्दभा अजाश्चात्र समवेता सन्तो भुक्तशेषमन्नादिकं भोक्तुकामा निभाल्यन्ते !'

भानुदत्तः—'सत्यमेतत् ! मन्ये ज्ञातिजनास्तु सर्वे भोजनं कृत्वा स्वगृहान् प्रतिजग्मुः । निर्णीतिर्त तैर्भोजनमस्मदागमनात्पूर्वमेवेति मे प्रतिभाति !!'

रामनाथ —'एतत्त्वतीव विचित्रम् ! अदृष्टमश्रुतपूर्वं चैतत् । कथमस्मास्वनागतेष्वेवैतद्भोजन न्यवर्तन्तेमे ज्ञातयः ? अधुना क पृच्छामः ? अत्र तु नैकोऽपि सजातीयो विलोक्यते ! तदधुना किं विधीयताम् ?'

भानुदत्त —'वस्तुतोऽस्माक गृहादत्रागच्छता मार्गे भूयान् हि समयोऽतिक्रान्त । समस्ता रात्रिरेव व्यतीयाय । चन्द्रचन्द्रिकायां मार्गमतिलङ्घमाना वयं कालातिक्रममेव नावादध्महि । तेन हि महानेव विलम्बो बभूव । हा, हन्त ! महदनिष्टमेतद् बभूव !'

रामनाथः—'अहो ! नागरिकाणामस्मज्ज्ञातिजनानामेतावद् दुस्साहसम् । अस्मद्विनैव ते भोजन कृत्वा गृहान् गतवन्त । अहो, भोजनभट्टत्वमसमीपाम् । अय तु प्रत्यक्षमेवास्माक ज्ञातिपूज्यानां वरिष्ठपञ्चानामपमान । ननु मूर्खास्त एते नागरिका स्वेच्छाचारिण । ये प्रायः सदैव ज्ञातिविधाननियमानामुल्लङ्घन कुर्वते । नाय साधारणो विषयः इयमस्माक प्रत्यक्षमेवोपेक्षावधीरणा तिरस्कारश्च । तदुन्यतामिदानीं किं कर्तव्यमस्माभिः ?' भानुदत्त.—'महाशय ! अलमत्रातिमात्रचिन्तितेन ! सहसास्माभिर्ज्ञातिभ्यो न कुपितव्यम् ! सम्भाव्यते, कदाचित् किमपि तादृश किमप्यनिष्ट घटनान्तर

जात भवेद्यद्वशात् ज्ञातिजना स्थित्यनुरोधादनिवार्यतानुरोधाद्वा भोजनादिक परिसमाप्य गृहान् गता स्यु । यद्वा वद्वा भवतु, तद्वय मार्गे नगर गच्छामः तत्र गत्वा यथार्थां स्थिति जानीयाम ।'

रामनाथः—'साधूक्त भवता । विवेकवद्वचनमेतद्भवताम् । तदेवानुसराम । तत्सर्वाद्वावस्माक नगरगमनमेव सर्वथोचितम् । सम्भवति, बहुजनसमुदायेऽस्मिन् ज्ञानिना समाजे कश्चिद्व्रणो वाकस्मात् पिहितो वा जात स्यादथवान्यत्किमप्यत्याहितमकस्मादापतित स्यात् । दैवगत्या वा राजकारणाद्वान्यस्माद्वा कस्मादपि हेतो कोऽपि विघ्नबाधा निरोधो वा सजात स्यात् । तदागम्यताम्, वय नगर गच्छाम. । अस्माक सहचरा इमे शिष्यबालादयो युवान सर्वेऽत्रैव सरोवरतटे कथचिदुपविश्यास्मान् प्रतीक्षन्ताम् । आवा द्वावेव प्रमुखौ वृद्धौ ( द्विवेदीक्षितौ ) नगर गच्छाव ।'

अथैव निश्चित्य तौ द्वावपि द्विवेददीक्षितौ नगर जग्मतु । मार्गे सर्वत्र घनान्धकारो नि स्तब्धता चासीत् । तौ द्वावपि ग्रामीणवेशौ लगुडहस्तौ ब्राह्मणौ मार्गे चलन्तौ दृष्ट्वा श्वानो भषन्ति स्म । नगररक्षणायाटन्तो राजकीया रक्षाविभागीया' प्रहरिणस्तौ 'कोऽत्रागच्छति ? किमर्थं रात्रौ नगरवीथीषु भ्रमथ ?' इत्यादीन् प्रश्नान् मुहुर्मुहु पृच्छन्ति स्म । तान् प्रति स्वागमनस्य प्रयोजन निवेदयन्तौ, समुचितमुत्तर च प्रयच्छन्तौ, मार्गेऽज्ञाताया भूमौ पदे पदे प्रस्खलन्तौ यष्टिसाहाय्येन कथमपि कृच्छ्रेण शनै शनैरुपाध्यायस्य गृह प्रापतु । तत्र गत्वा तद्गृहाङ्गणमासाद्य द्वारदेशे तिष्ठन्तौ तौ-भो भो ! उपाध्याय ! अयि भो उपाध्यायमहाशया ! इति प्रोच्चै स्वरेण भूयो भूय' समाह्वयाताम् । परन्तु न कोऽपि तत्सम्बोधन शुश्राव । बहुवार तौ दीर्घतरै स्त्रि सम्बोधनैस्तमुपाध्यायमामन्त्रयतां, मुहुर्मुहु' सखटखटाय्यनिमपि कपाटौ जघ्नतु' पर गभीरनिद्रावश गतेषु जनेषु नैकोऽपि प्रबुद्धो जागरितश्च । परनैराश्य गतौ तौ यदा महन्त निम्नमाह गतौ तदान्ते गगनभेदि सम्बोधन कृत्वा जगर्जतुर्वारंवार चाह्वयतां तदोपाध्यायस्य प्रतिवेशिनो जना केचिज्जागर्तिमासाद्य तेऽपि चोपाध्याय पुन' पुन समबोधयंस्तदा महता काठिन्येनोपाध्यायस्य गृहान्त प्रकोष्ठान् कश्चिज्जागरित सन्नुवाच--'कोऽस्ति भो !' तावाहतु 'आवां द्विवेददीक्षितौ स्व ।' श्रुत्वैतयोर्वचन तत्कण्ठध्वनि परिचीय चोपाध्यायमहाशय 'आगच्छामि भो' ! इति ब्रुवन् झटिति द्वारदेश

समागत्य द्वारकपाटावुद्घाट्योचे–"आगम्यताम्, महाभागा! स्वागतम्! स्वागतम्! निद्रावशं गतेन मया भवद्वचनं नाकर्णितं तत्क्षम्यताम्!!" तावूचतु –'अपि ज्ञातिभोजनं परिसमाप्तम्? अपि ज्ञातिजना सर्वे भुक्त्वा स्वगृहान् प्रति ययु? उपाध्याय –भवदागमने ऽतीव विलम्बोऽजायत। अनागतौ भवन्तौ विचार्य सर्वेऽपि ज्ञातयो भवत्कृते महतीं चिन्तां चक्रु। पथि समाव्रजतां भवतां माभूत्किमप्यनिष्टमिति सर्वेऽपि चिन्तोद्विग्नमानसा व्याकुलाश्च बभूवु। परमेश्वरात् सर्वेऽपि भवत्कुशलं कामयमाना मध्यरात्रं यावत् भवन्तावेव प्रतीक्षणपरास्तस्थु यदा मध्यरात्रोत्तरमपि भवन्तौ ज्ञातिभवनं न प्रापतुस्तदा सर्वैर्भोजनं परिपच्यान्ते येन केन प्रकारेण भुक्तम्। एवं निर्वर्त्य कार्यजातं स्वगृहान् प्रति गता ते। अहमपि गतेषु सर्वेषु कियन्तं कालं भवन्तौ प्रतीक्षमाणोऽस्थाम्। पर्यन्ते नैराश्यं गतोऽहमधुनैवात्रा यातोऽस्मि। श्रमखिन्नोऽहं गभीरनिद्रावशंगत। अतोऽग्रे भवन्तावेव प्रमाणम्!'

दीक्षित –'आम्, ज्ञातमेतत् सर्वं तु, परमुच्यताम्, अत्र प्रकरणे सम्मानसत्कारतिलकादिकं केन सम्पादितम्? अथाद्य सत्कारतिलकस्तावत्केन स्वीकृत? ज्ञातिदक्षिणाद्रव्यं च क स्वीचकार? केन वा जलपात्राणि व्यतीर्यन्त?'

उपाध्याय –'श्रीमत्स्वनागतेषु कथं स्यात्सम्मानसत्कार?' इति सर्वैर्ज्ञातिवृद्धैर्विचिन्त्य स्थगितोऽसौ सम्मानतिलकसत्कार! अस्तु तावद्भवन्तौ गृहाभ्यन्तरमागच्छताम्! अन्त प्रविश्य स्नानसन्ध्यादिकं कुरुताम्, तावन्मे गृहिणी भोजनं पचति। भोजनं कृत्वा क्षणं वामकुक्षि विश्रम्य ततो यथेच्छं विदधाताम्!'

आकर्ण्यैवोपाध्यायस्य तद्वचनं स दीक्षित क्रोधावेशवशाज्ज्वलन्निव भूताविष्ट इव ग्रहग्रस्त इव सर्वामपि तत्रत्यां स्थितिमेकपदे विस्मृत्य प्रकम्पमानसर्वावयवो रौद्रभीषणं सिंहाक्रान्तचेष्टां कुर्वाणोऽब्रवीत्–

'आ, पापात्मन्! त्वद्गृहेऽस्माकमेतावदपमानं कृत्वा पुनर्भोजनाय कथयसि? दुष्ट! पाप!! अधम!!! चाण्डाल!!! नेयं साधारणी वार्ता। अयमस्माकं महानेवासह्योऽपमान। तवैव पापस्मनो दुर्विचेष्टितमेतत्सर्वम्। वर्षशतादप्यधिकसमयाज्जायमानमस्माकमेतं ज्ञातिवरिष्ठत्वं निरोद्धुं किं नु तवेदं दुस्साहसम्? ज्ञातिषु या गणना

युष्माकमकुलीनानां बतोपाध्यायहन्तकानाम्। तिष्ठ तावत् क्षणमेकं यावदहं तेऽस्यापहारस्य तात्कालिकीं चिकित्सां कुर्वे ! दुराचार ! भुङ्क्ष्वेदानीमेवास्य पापाचरणस्य प्रतिफलम् ! हुँ, त्वं मेऽपमानमतिदुर्विषह्यं कृतवानसि !!!'

इति वदन्नेवासौ दीक्षितः स्वकटिनिबद्धात् परिकरवस्त्राद्यो निगूहितां तीव्रधारामेकां छुरिकां निष्कास्य तां चापगतकोशां कृत्वा स्फूर्जद्बलवेगेन स्वगलं चिच्छेद ! क्षणादेवासौ सद्यः प्राणान् मुमोच !! मुहूर्तमात्रे उपाध्यायस्य गृहप्राङ्गणे मूलतश्छिन्नो महावृक्ष इव भूमौ तन्मृतदेहो निपपात।

'अरे ! हा हन्त !! हतोऽस्मि मन्दभाग्यः ! किमिदं मे शिरसि ब्रह्महत्यापापमापतितम् !! किं करोमि !!! क्व गच्छामि !!! किमिदं मे वज्रलेपसदृशमत्याहितम्। अधुना किं मेऽनेन लाञ्छितेन हतजीवनेन प्रयोजनम् ! अरे रे ! किमिति ममैते कृपणाः प्राणा नो निर्गच्छन्ति देहादस्मादधमाधमात् !' इत्येवंविधान् प्रलापान् कुर्वाणो भूयोभूय इतस्ततः किंकर्तव्यविमूढो ग्लानिं, लज्जां, घृणामपमानं च तीव्रतरमनुभवन्नसावुपाध्यायस्तत्रैव गृहाङ्गणस्यैकपार्श्वे पतितमेकं प्रस्तरखण्डं गृहीत्वा स्वशिरसि तेन तथा वेगात्प्रजह्रे यथा सोऽपि तत्कालमेव प्राणैर्वियुक्तो भूमौ पपात।

दृष्ट्वैतमवितर्कितसम्भवं विचित्रमतिभीषणं व्यतिकरं सहसाकस्माज्जातमतीवारुन्तुदं घटनान्तरं सर्वेऽपि चोपाध्यायस्य गृहसदस्याः प्रतिवेशिनो जनाश्च युगपत्तत्रागत्य महान्तं कोलाहलमाक्रोशं च कर्तुमारेभिरे। 'हा, हन्त ! महदेवानिष्टं समभूत्' इत्युच्चैर्वदन्तः करुणाकरुणैर्विलापकलापैश्चारुदन्। 'अहह, द्वावप्येतौ पुरुषौ प्राणान्व चक्रतु ! अधुना किं क्रियताम् ?' इति ब्रुवाणा यावत् स्वकर्तव्यं निश्चिन्वन्ति तावदेवास्या दुर्घटनायाः प्रसारः सर्वतोदिक् क्षणादेव शीघ्रतरं समभूत्। यावत्ते सर्वे द्वयोरप्यनयोर्दाहसंस्कारविधिमुपपादयितुं प्रयतन्ते तावदेव राजकीया रक्षाविभागीयाः पुरुषास्तत्राजग्मुस्तथागत्यैव तत्कालोचितमभियोगं समारोप्य न्यायपद्धतेर्नियमानुसारं कार्यजातं कर्तुमारभन्त। तावता कालेन सर्वे ज्ञातिसभ्याः परिचिता व्यवहारकुशला जनास्तत्र समाययुः। महानेव हाहाकारः प्रावर्तत। रोरुद्यमानानां जनानां गगनभेदिभिराक्रोशैरार्तनादैः करुणाविलापध्वनिभिश्च दशापि-

दिश स रोदसी च समवेदनया महद्दुखभाजः शोकमग्नाश्च बभूवु ।

अथैनं महदनिष्ट करुणापूर्णं प्रसग यदृच्छयोपस्थित विभाव्य केचन समाजस्य शुभचिन्तका कुलवृद्धा सचेतसो बुद्धिमन्तश्च सदस्या राजभवन गत्वा राजानमुपस्थाय तदग्रे महान्तमनुनय विनय च कृत्वा वार वार सम्प्रार्थ्य तयोर्द्वयोर्मृतयोर्ब्राह्मणयो शवपरीक्षण निवारयितु निवेदयामासु । ब्राह्मणान् तान् सर्वान् राजाश्रितान् राज्यस्य शुभचिन्तकाश्च मत्वा परमकृपालुना शासकेन तच्छवपरीक्षण निरुध्य तयोरन्त्येष्टिसंस्कारकरण लिखितरूपमाज्ञापितम् । ततोऽपयातेषु तद्गृहाद्राजकीयपुरुषेषु तयोर्द्वयो शवौ श्मशान नीत्वाग्निसस्कार-पूर्वक भस्मसात्कृतौ सर्वैर्ज्ञातिजनै ।



# 'परिवर्तनम्'

शिवदत्तशर्मा चतुर्वेदः

( काशी-हिन्दूविश्वविद्यालयस्थे संस्कृतमहाविद्यालये, साहित्यप्राध्यापकः )

प्रभातवेलेयमागता, भगवान् अंशुमाली प्राचीं सनाथीकर्तुमिच्छति । सम्प्रति तु लालिमा विलोक्यते तस्यां दिशि । परितो तरुकोटरान्निर्गताः पक्षिणः प्रातःकालिकं समीरं सेवितुमिच्छन्तो नभसि उड्डीयन्ते । सर्वत्र विशुद्धं वातावरणं प्रतीयते ।

समीपे एव पवित्रा सरित् प्रवहति । तस्यास्तटे द्वौ ब्राह्मणवटू संध्यामुपासाते । यदा भगवान् भुवनभास्करः स्वकीयं प्रथमं किरणं प्राक्षिपत्, तदैव एताभ्यां तस्मै अर्घ्यं दत्तम्, पुनश्च अन्योत्तरं कर्म आरब्धम् ।

पार्श्वे एव ब्रह्मनिष्ठस्य साक्षात्तपोमूर्तेः ऋषिवरस्य वसिष्ठस्य आश्रमो दृश्यते । एतौ तेजस्विनौ वटू अस्मिन्नेव आश्रमे निवसतः । आश्रममिमं दृष्ट्वा स्वर्गस्य कल्पना मनस्येव इति जागर्ति । समन्तान्नानाविधानां कुसुमानां सौरभं समायाति । आश्रमनिकटे सर्वतस्तेजस्विनस्तपस्विन एव दृश्यन्ते । अहो तपः प्रभाव एतेषाम् । सर्वतोऽपि शान्ते साम्राज्यं दरीदृश्यते । प्रकृतिपरिवर्तनं प्रत्यक्षमत्र दृश्यते यद् एकस्मिन्नेव जलाशये गजेन्द्रो मृगेन्द्रश्च जलं पिबतः । अहो शान्तम् आश्रमपदम् ।

उपासिता सन्ध्या वटुभ्याम्, अधुना एतौ अग्निहोत्राय आश्रमं प्रस्थितौ । किञ्चिद्दूरे गत्वा तौ साश्चर्यं पुलकितगात्रौ विविधानश्वान् मत्तगजेन्द्रान् मनुष्यसमूहांश्चापश्यताम् । कुत्रचित्सुप्ताः, कुत्रचिदुत्थिताः, केचिद्वाद्यानि वादयन्तः, अपरे शस्त्रसज्जिताः नानाविधवस्त्रधारिणः पुरुषाः ताभ्यां दृष्टाः । अथ तत्सर्वं दृष्ट्वा श्रुतिश्रवाः सोमपीथिनमुवाच ।

श्रुतिश्रवा —अहो सोमपीथिन्, पश्यसि एतत्सर्वम् ? कुत एते समायाताः ? के इमे सन्ति ? मन्ये राजपुरुषा सन्ति ।

सोमपीथी—पश्यामि मित्र ? ममापि चेतसि महत् कुतूहल-मुत्पन्नम्। कश्चित् प्रष्टव्योऽस्मिन्विषये। यतो हि एते अस्मदाश्रमे आयाता अतिथयोऽस्माकं संजाता। अतस्तत्र प्रात स्मरणीय महर्षि विनिवेदयिष्याव.।

एवं चलति कौतूहलात्मके वार्तालापे पुरत एको राजपुरुष आगच्छन् दृष्ट। एतावपि तदभिमुखं चलितौ।

तेन आगत्य सादर प्रणम्य उक्तम् यद् भो ब्रह्मचारिणः चक्रवर्ती सम्राट् विश्वामित्र भवन्तौ प्रणतिपुरस्सरमाह्वयति।

एतावपि साशीर्वाद—किं किं महाराजो विश्वामित्रः ? अपि महाराजविश्वामित्रस्य एतत्सर्वं सैन्यादिक वर्तते ?

राजपुरुष —आम् ! भगवन्तौ।

श्रुतिश्रवाः—कस्मिन्समये समायातो महाराजः ? ह्य सायकाले तु अत्र किमपि नासीत्। इदानीमेवास्माभिर्विलोकितमेतत्सर्वम्। वय तु चकिता सजाताः।

राजपु०—भगवन् ! राजराजेश्वर दिनत्रयात्पूर्वमेव राजधानीत प्रस्थितो मृगयार्थम्, बहव. क्रूरजन्तवो व्यापादिता। ह्य सायम् एको भयकरः सिंहः दृष्टो महाराजेन। पर सपद्येव स निबिडे वने परोक्षोऽभवत्। आज्ञप्ता वय सर्वे तस्यान्वेषणाय। सर्वमपि अरण्य-मस्माभिरन्विष्टम्। मार्गे चान्ये बहवो हिंस्रजन्तव यमपथपथिका कृता। परमस्माभिस्तस्याकृति परिचीयते, स तु न दृग्गोचरीभूत। अहो भयकरस्तस्य सटाबन्धः। ईदृश. सिंहस्तु नावलोकित कुत्राप्य-स्माभिः।

श्रुतिश्रवा —( सकुतूहलम् ) ततः किं जातम् ? अग्रे कथय तावत्।

राजपु०—अग्रे श्रूयताम्। तस्यैव सिंहस्य पदचिह्नान्यनुगच्छन्तो वय प्रगाढेऽस्मिन्नरण्ये इतस्तत परिभ्रान्ता। किञ्चित्समयानन्तरमेव च अश्रौष्म तस्यैव हृदयद्रावक सिंहनादम्। यदा तस्य स्मरण कुर्म, तदा जायते हृदि कम्पः।

सोमपीथी—ततस्तत।

राजपु०—ततस्तु भयभीता सर्वे स्वमनसि, अयमागत इति

कम्पमाना अत्रैव शिबिरनिर्माणस्य महाराजाय सम्मतिं प्रददिम। नरेन्द्रोऽपि प्रस्तावमिदं स्वीचकार।

तदाज्ञयात्रैव अस्माकं रात्रिनिवासः समजायत। सम्प्रत्येव स शयनादुत्थितः, दृष्टाश्च तेन भवन्तः। अतो मां श्रीमता सबहुमानमाह्वानाय आज्ञापयन्।

श्रुतिश्रवाः—अवश्यं लोककल्याणकारकस्य राज्ञः दर्शनं करिष्यामः। इत्युक्त्वा ते त्रयोऽपि राजाधिष्ठानं प्रति प्रस्थिताः।

अथ कुत्रचित् स्वोन्नततया उच्चैःश्रवसमपि तिरस्कुर्वन्तो हयाः, कुत्रचिन्निर्झरदानवारयो मत्तदन्तिनः, कुत्रचित्तेषां पादाघातेन शुण्डक्रीडया वा उत्पाटिताः तरवः, एकतो मृगयाहताः भयंकराकृतयो जन्तवः, अपरतो जीविता एव बद्धाः नानाविधाः पशवः, क्वचित्सुदीर्घाणां वृक्षाणामुपरि सुप्ता बहवः सैनिकाः, कुत्रचिन्नित्यक्रियानिर्वृत्त्यर्थं प्रस्थिता जनाः तैः मार्गे दृष्टाः। सपद्येव प्रविविशुस्ते राजाधिष्ठानम्।

अत्र एकस्मिन्नुच्चसिंहासने प्रबलप्रतापी महाराजविश्वामित्रः उपविष्टः। नह्ययं राजा अपि तु शरीरबद्धा वीरतैवास्मिन् रूपे समागता प्रतिभाति। एतयोः सुदृढबाह्वोः संरक्षकत्वे किं भवते भयलेशोऽपि आसमुद्रक्षितिनिवासिनः प्रजाजनस्य? परितश्च राज्ञः उपविष्टाः मन्त्रिणो अङ्गरक्षकाश्च। यदा एतौ द्वावपि बटू तत्र प्रविविशतुः तदा सर्वे स्वासनादुत्थिताः, राज्ञा च उत्थाय प्रणामाञ्जलिर्बद्धः। उभाभ्यामपि मङ्गलमयवेदवाक्यैराशीर्वादः कृतः।

अथ सम्राड् आश्रमवासिनां कुशलं पप्रच्छ। "सर्वं कुशलं भवतां संरक्षकत्वे" ताभ्यामुत्तरितम्।

'अत्रागत्य तु चेतसि एकः अलौकिकः आनन्दः उत्पन्नः। सेयं शान्तिस्तु लोकोत्तरैव या मानसं सर्वभावेन पवित्रयति। कस्य तावन्महर्षेराश्रमोऽयम्?' इति पृच्छति राजनि अत्रभवान् सप्तर्षिष्वेकतम स्वतपोनलेन समूलोन्मूलिताशेषभुवनक्लेशो महर्षिः वशिष्ठ इममाश्रममधितिष्ठतीति-तौ ऊचतुः।

'अहो सौभाग्यमहो सौभाग्यम्-पूर्वोपार्जितानां पुण्यकर्मणां विपाकेनैव अवसरोऽयं प्राप्य यत्तस्य तपोमूर्तेर्दर्शनेनात्मानं पवित्रयिष्यामि' अपारानन्दमग्नवदनः सम्राट् प्रोवाच।

'आवामपि गत्वा महर्षिं विनिवेदयाव' इत्युक्त्वा तौ बटू आश्रमाय प्रस्थितौ।

राज्ञा चाज्ञप्ताः सर्वे यन्नित्यया स्नानादिक्रियया सर्वे निर्वृत्ता भवन्त्विति। सर्वेऽपि नद्यां स्नात्वा नित्यक्रियां च निरवर्तयन्। साम्राडपि विहिताशेषधर्मकार्यः ऋषिदर्शनार्थं अमात्यादिभिः सह प्रस्थितः।

नानापुष्पकदलीपत्रादिभिर्मण्डितम् आश्रमद्वारं प्रविश्य ते ऋषिसविधे चलिताः सर्वेऽपि।

अथ कुत्र चिदाम्रपनसादिवृक्षेषूपविष्टानां कूजतां शुकसारिकाणां रवः तैराकर्णि, कुत्रचिदितस्ततो भ्रमन्तो मृगाः तैरवलोकिताः। समस्तं आश्रमप्रदेशो यज्ञकुण्डोद्भूतेन सुगन्धिना धूमेन पवित्रीक्रियते। एकतो ब्रह्मचारिणां वेदध्वनिः श्रूयते-अपरतो नानाविधानां पक्षिणां कूजितम्। गच्छद्भिः सर्वैरेव सम्मुखे एकोऽतीव रमणीयस्तडागः अवलोकितः। अवर्णनीया खलु सरसः शोभा। अकस्मादेव निपपात तडागतटे स्थितस्य सिंहस्योपरि सर्वेषां दृष्टिः। तं दृष्ट्वा तु सर्वे स्तब्धा जाताः। सर्वैरपि ज्ञातं यदयमेव स सिंहः, यः अस्माभिः गतदिनेऽवलोकितः। नासीत्कस्यापि समीपे किमपि शस्त्रम्। सर्वेऽपि भयकम्पिताः संजाताः।

नरेन्द्रस्तु तं दृष्ट्वा किञ्चिद् ओजस्विवदनः सन् शस्त्रजिघृक्षया प्रधानसेनापतिमुखमवलोकयन् तस्थौ। 'धीरा सदृशविक्रमं दृष्ट्वा उत्साहिनः एव भवन्ति ननु भीताः' इत्येषा भावना नृपतौ मूर्तिमती आसीत्। एतस्मिन्नेव क्षणे श्रुतिश्रवाः सम्मुख आयातः। सर्वानपि भयभीतान् सम्राजं च सिंहस्योपरि महदुत्सुकं दृष्ट्वा श्रुतिश्रवा अवदत्यन्नायं वनराजः कस्यापि किमपि कर्तुं शक्नोति। राजानमुद्दिश्य च उक्तवान् यत्—

राजन्! अत्र तु एवमेव जन्तवस्तिष्ठन्ति। आश्रमे कोऽपि जीवो न व्यापाद्यते। निश्शंकमागम्यतां भवद्भिः।

अनेन वचनेन सर्वेऽपि किञ्चिन्निर्भीकतां प्रापुः।

अग्रे तैरवलोकिताऽतीव मनोहरा वृक्षावली। तत्रैव एकस्य सघनवृक्षस्याधस्तात् विजितकामक्रोधप्रभृतिकः, निरस्तरागद्वेषः, मूर्तिरिव प्रसन्नतायाः पद्मासनेनोपविष्टो महर्षिर्वसिष्ठस्तैरवलोकितः।

सम्राड् विश्वामित्रः ऋषिं साष्टाङ्गं प्रणम्य अर्घ्यादिकमददत्।

एव सविधि पूजा कृत्वा सर्वैरपि ऋषेश्चरणामृतग्रहणेन आत्मा पवित्रितः। यथास्थानं सर्वेऽप्युपविष्टाः।

अस्मिन्नेव समये स एव सिंह पुरस्तादागच्छन् सर्वैरवलोकितः। स तु शान्तमुखमुद्र आगत्य ऋषे वामभागे उपविष्ट—ऋषिश्च स्वहस्तं तच्छिरसि निधाय स्वप्रेम प्राकटयत्।

सर्वं आश्चर्येणावलोकितम् एतत्सर्वम्। कुशलप्रश्नानन्तरम् नैकाना धार्मिकाणा राजनैतिकाना च विषयाणा प्रश्नोत्तराणि जातानि।

यदा वार्तालापेन राजा संतुष्टो बभूव, तदा महर्षितो गमनस्य आज्ञां ययाचे।

ऋषि—अद्य तु अस्मिन्नेव आश्रमे ग्रहीतव्या सपर्या भवद्भिरातिथेयी।

विश्वामित्र—भगवन्! नाहमेकाकी। महान् जनसमूह, अनेके दन्तिनः, बहवोऽश्वा मत्सहचरा सन्ति।

ऋषि—अस्य काऽपि चिन्ता भवद्भिर्न करणीया। अत्र परमेश्वरस्य कृपया कस्यापि वस्तुन न्यूनता नास्ति।

एतदाकर्ण्य तु विश्वामित्र स्वमनसि अतीव असूयां बभार। 'किमस्माकमतिथिसत्कारं करिष्यत्येष वृद्ध' इति रजोगुणजनितोऽहंकारः तस्य चित्ते व्याप्तः। असूयतया तेन आज्ञप्ता सर्वे—यदद्य अस्मिन्नेवाश्रमे सर्वेऽपि भोजनादिकं कुर्युरिति।

महर्षिणाऽपि सर्वे शिष्याः तेषां सत्काराय आज्ञप्ताः। सर्वेऽपि शिष्या महर्षिवचनं श्रुत्वा झटिति तेषाम् आनिष्याय सन्नद्धा बभूवुः। यद् वस्तु यस्मै रोचते, तस्मै तदेव वस्तु दीयते स्म एभिः। 'केसरसुरभितम् एलामिश्रित घृताप्लुत संयावमहमभिलष्यामि' 'कोमलकोमला अपूपा मह्यं रोचन्ते, 'कवोष्णा कचोर्य इह दीयन्ताम्' 'तप्तवप्ताः शष्कुल्यो (जलवलिका) मया प्राप्ता' अहं मोदक भोक्ष्ये' 'महान्तु अमृततुल्यं प्रगाढ पायसं प्रदेयम्', इत्यश्रूयत कोलाहल। अन्ये सर्वेऽपि नानाविधानि व्यञ्जनानि याचन्ते। शिष्याश्च सर्वेरपि याचितै पदार्थैस्तान् सत्कुर्वन्ति।

अन्ये फलाहारा विविधानि फलानि इच्छन्ति-तान्यपि ते प्राप्नुवन्ति।

केचिद्भक्षयन्तो वर्णयन्ति यद् अहो स्वादिष्टा मोदकाः। सन्ति संसारे विविधानि मधुराण्यन्नानि पर मोदकस्यास्य सम्मुखे तु न सन्ति तानि किमपि। एवमेव केचिदपूपान्, केचित् क्षीरौदन प्रशंसन्तः तत्तद्रसमनुभवन्ति।

केचिदश्वानां कृते सस्यादिकं केचिद्दन्तिनामुपयुक्त रोटिकादिक गृण्हन्ति। येन यदिष्यते तदेव तेन प्राप्यते। निषेधवाचकशब्दस्तु तत्रत्ये कोश एव न लिखित। राज्ञो मन्त्रिणा च यदुत्तमोत्तम वस्तु अपेक्षितमसीत् तत्सर्वं यथास्थान यथासमय यथापरिमाणम् तैः प्राप्यत। सर्वे चकितचकिताः समतिष्ठन्त तस्मिन्नाश्रमे एतादृश विचित्र सत्कार दृष्ट्वा। नासीदेतादृश किमपि वस्तु, यद् याचित्वा तैर्न प्राप्तम्।

निर्वृत्ता सर्वाप्यातिथेयी। सर्वे भृशमप्रीयन्त। राजाऽपि नितरां सन्तुष्टो जिगमिषुरासीत्। परमेका जिज्ञासा तद्हृदये शूलभूता आसीत्।

आज्ञाप्राप्त्यै सम्राट् ऋषिसमीपेऽगमत्। प्रणम्य ऋषिं स उपविष्ट—त दृष्ट्वा प्रेमवर्षा कुर्वन् ऋषि प्रोवाच "अपि निर्वृत्त भोजनादिक भवद्भिः।"

विश्वा०—आम् भगवन्। सर्वमपि यथावज्जातम्। साम्प्रतं जिगमिषुरस्मि। परमेका जिज्ञासा वर्तते। यदि आज्ञा स्यात्तर्हि पृच्छेयम्।

ऋषि—राजन्! अत्र तु कापि गोपनस्य वार्ता नास्ति। या भवतां जिज्ञासा सा सानन्द प्रकाशनीया।

विश्वा०—महर्षे! केवलमिदमेव कुतूहल वर्तते यद् न दृश्यते कोऽपि महान् अन्नभाण्डागारः अत्र कुत्रापि। महती च मे सेना। एतादृश आश्चर्यजनकोऽतिथिसत्कारः भवद्भिः कथं कृत। कुत एतत्सर्वमायातम्। इयमेवैका जिज्ञासा मां मुखरीकरोति।

ऋषि—मया पूर्वमेव ज्ञातो भवतां प्रश्न। नात्र किमप्याश्चर्यम्। कामधेनुसुता अस्मिन्नेव आश्रमे तिष्ठति, तत्सकाशाद् विश्वस्मिन् यत् किमपि वस्तु वाञ्छितम्, तत्सर्वं प्राप्तु शक्यते।

विश्वामित्र—(सहर्षम्) एवम्? साक्षात्कामधेनुसुता वर्तते भवतामाश्रमे? तर्हि भगवन्! तस्या अत्र का आवश्यकता? सा तु अस्मद्राजप्रासादेषु उचिता। यत् किमपि आश्रमवासिनां आवश्यक

भविष्यति, तत्सर्वं राज्यत आयास्यति। कामधेनुरस्मत्सहगमनायाज्ञाप्यताम्। किमपि कष्टं तस्या न भविष्यत्यस्मद्राज्ये।

वशिष्ठः—राजन्! भवन्तः सानन्दं तां गृह्णन्तु। नास्ति मे लेशतोऽपि विप्रतिपत्तिरस्मिन्विषये। परं तदैव सा भवद्भिर्नेतुं शक्यते यदा सा भवता सह गमनं वाञ्छेत्।

विश्वामित्रः स्वीचकार मतमिदम्।

राजा कामधेनुसुतां नेतुमैच्छत्। सा तु एतत्सर्वं श्रुत्वा महर्षेः समीपे आगत्य तस्य पादयोरुपविष्टा—"महर्षे! कथमहं विसृष्टा भवता" इत्यभिव्यक्तिं च तया आर्तस्वरेण।

'नैव विसृष्टासि। नरेन्द्रस्त्वामिच्छति। यदि स्वइच्छा स्यात्तर्हि गच्छ। अन्यथा न त्वां कोऽपि बलाद् ग्रहीतुं शक्नोति।' इति महर्षिस्तामुवाच।

"अहं तु श्रीमत्पादपद्मयोरेव निवत्स्यामि।" इति सा दृढतया व्यनक्ति स्म।

एतज्ज्ञात्वा महर्षी राजानमुवाच यदियं नन्दिनी अत्रैव निवस्तुमभिलषति। अतो वयमस्मिन्विषये अशक्ताः।

श्रुत्वा रजोगुणाभिभूतः सम्राट् क्रोधेन रक्तनेत्रः समस्तसैनिकान् वशिष्ठसहितां कामधेनुसुतां बद्धुमादिदेश। आज्ञां प्राप्य सर्वेऽपि सैनिकाः स्वस्वशस्त्रैः सज्जीभूय कामधेनुसुतां बलाद् बद्धुं गताः।

सपद्येव पुनरागत्य सेनापतिना निवेदितं सम्राट्! यत् यदा वयं तयोर्बन्धनार्थं तत्र गता तदा ऋषिशरीरत उद्भूत् एको महान् तेजोराशिः, तत्र वयं द्रष्टुमेव न अशक्नुम यत्कुत्र महर्षिः कुत्र च नन्दिनी। तेन तु तेजसाऽपि वयमन्धीकृता।

महान् क्रोधः समजायत श्रुत्वैतद् राज्ञः। "धनुर्धनुः" इति वदन् धनुर्गृहीत्वा "अहं पश्यामि तस्य वृद्धस्य शक्तिम्" इति क्रोधोत्तेजितनेत्रः स महर्षेः सम्मुखं जगाम।

महता क्रोधेन निक्षिप्तानि तेन अनेकानि भयङ्कराण्यस्त्राणि महर्षेरुपरि, परमहो आश्चर्यम्! महर्षिणा उत्थापितः केवलं स्वकीयो ब्रह्मदण्डः। यानि अस्त्राणि राज्ञा निक्षिप्तानि, सर्वाण्यपि तेजःपुञ्जेऽस्मिन् ब्रह्मदण्डे व्यलीयन्त। सर्वाण्यपि तेन ब्रह्मदण्डेन भक्षितानि। ऋषेरुपरि न दृष्टः कोऽपि प्रभावस्तेषाम्। पुनः पुनः प्रकुप्य अग्निवाय्वादिदिव-

विधास्त्राणां प्रयोगः राज्ञाकृत, पर सर्वमपि तद् महर्षे· ब्रह्मदण्डे अन्तर्हितम् ।

राजा समस्तमपि बलप्रयोग कृत्वा यदा न शशाक किमपि कर्तुं महर्षे, तदा महता वैलक्ष्येण तेन धनुर्भङ्क्त्वा निक्षिप्त भूमौ। मन्त्रिण आहूय प्रोवाच राजा-यद् "गम्यताम्, राज्यं परिपाल्यतां भवद्भि । अहं तु अनेन वृद्धेन या शक्ति प्राप्ता ता लब्ध्वैव निवर्तिष्ये।" एतावदुक्त्वाऽरण्ये तपस्तप्तु प्रस्थितो राजर्षि ।



# शत्रु, मित्रं वा ?

श्री कलानाथशास्त्री

(साहित्याचार्यः, एम. ए., राजस्थानभाषाविभागे जयपुरस्थे सहायकनिदेशकः)

औषधालयान्महेन्द्रो यथैव गेहं परावर्तिष्ट, तथैव स संवादमिममश्रौषीद् यत् राकेशस्तस्मिन्नेव विद्यालये प्राध्यापकः संवृत्तो यस्मिन् सुरेन्द्रोऽधीते। सहसैवासूयाविषमस्य तस्य हस्ताद् हृदयगतिश्रवणयन्त्रं (स्टेथोस्कोप) त्रिपादिकायाम् (टेबल) अपतत्। भृशमुद्वेजितोऽसौ समग्रेऽपि प्रकोष्ठे कोणात्कोणं कतिवारं बभ्राम। अतीतस्य मर्मस्पृशो घटना प्रास्फुरंस्तस्य स्मृतौ। किं कदापि क्षम्यो राकेशस्याऽपराधः? समाजस्य समक्षं नरहत्याया कलङ्कः! सोऽपि चिकित्सकस्य कृते!! भीषणोऽपराधः!! अक्षम्यमागः!!! तस्य चक्षुषो रक्तस्फुलिङ्गानुद्वमताम्।

× × ×

तद्दिनं—यस्मिन् हि महेन्द्रस्य पिता प्रापत् प्राड्विवाकपदम्। प्रीतिभोजस्याऽऽयोजनमासीत्तस्य गृहे। घोषमहाशयः, मिश्रपादाः, नलिनकुमारः, सुंदरी चतुर्वेदी, अन्ये चाऽगणिताः सुहृदः समवायन्त समभिनन्दितुमस्य पितरम्। परं स क्षुद्रो वाक्कीट, अभिभाषकः—राकेशस्य पिता। नाऽऽसौ स्ववदनमप्यदर्शयत्। सोऽपि तु प्रतिवेश्यासीत्! आसीन्महेन्द्रः स्वयं लघीयांस्तदा। वयस्यकल्पो राकेशस्य। राकेशस्तेन पृष्टोऽभूत् 'राकेश, त्वमागमिष्यसि प्रीतिभोजेऽत्र ?' कथमपि विरूपां मुद्रां प्रदर्शयन्—प्राह "न वयं लालायिताः प्रीतिभोजेभ्य। नैवापरस्य गेहाङ्गणे प्रवेशलाघवं लिप्सामहे।"

राकेशस्य पितुश्चित्तवृत्तिर्न जाने किमुतकिमाकाराऽऽसीत्? आरम्भादेव स परोन्नतिमसूयते स्म। प्रीतिभोजदिवसे स नगरादेव बहिर्जगाम। किमन्यत्, महेन्द्रस्य पितुरौर्ध्वदैहिकेऽपि स न समाजगाम।

किन्त्वेतद्विपरीतम्; यदा राकेशस्य पिता विषूचिकाग्रस्तोऽभूत्, तदा सर्वानपि पापापराधान् विस्मृत्य राकेशस्य प्रार्थनोपरि त्वरितमेव

महेन्द्रस्तत् पितरं समुपचचार। कियती करुणाजनिकाऽऽसीन्मुखमुद्रा राकेशस्य तदा। निर्निमेषं महेन्द्रो राकेशस्य पितुः पार्श्वेऽस्थात् समग्रामपि रात्रिम्। किन्तु चरमायां स्थितौ जीर्णे तस्मिन्नरकङ्काले किमासीत् काऽप्याशा जीवितस्य? समग्रामपि रात्रिं समग्रं च दिनमयं जीवितोऽस्थात् किं नासीदिदमेव भूयस्तरम्? किन्तु राकेश? ईर्ष्याकषायितोऽसौ पितुर्मृत्योरनन्तरं निजगाद सर्वेषां समक्षम्—'हन्त, नूनं सम्यक् चिकित्सितं भवता। नासीदाशङ्कितं मया यदेवं विश्वासघातं करिष्यति भवान्।' कीदृशोऽयं मर्माघातोऽभूत्! किमेतस्यैव कृते राकेशो महेन्द्रं चिकित्सायै प्रार्थितवान्? "किं कठोरतमेनाऽपि यत्नेन भवत्पिताऽऽसीज्जीवयितुं शक्यो राकेश!"

"नैव, चिकित्सकशिरोमणे! सम्पादितं भवता सर्वमपि। श्रीमत्पिता यन्नाऽशक्त् कर्तुं, भवता सम्पादितं तत्।"

भयङ्करमयमाननमिदमासीत्! मर्माहतो महेन्द्रस्तदैव परावर्तत गृहम्। एतावानपमानः? प्रतिशोधः! प्रतिहिंसा!! महेन्द्रस्य दन्ताः कटकटा शब्दमकुर्वन्।

सर्वा अपि जीवनस्य घटनाः प्रस्फुरन्त्य इवाऽऽसन्।

तद्दिनं यदा तत्पत्नी अरुणा मृत्युशय्यायामासीत्। नगरस्य वरिष्ठचिकित्सकस्य पत्नी। कियदासीद्वराक्यास्तस्या आयुरेव? केवलं सप्तविंशतिः! सुरेन्द्रः शिशुरासीद् दुग्धमुखः। सूचीवेधैस्तस्याः सर्वमपि गात्रं विवरपूर्णमभूत्। परन्तु सा सौम्यमूर्तिः सुरेन्द्रं विहाय सर्वदार्थं नेत्रे निमिमील। सर्वेऽपि भृत्या मुक्तकण्ठं रुरुदुः। सर्वेऽपि प्रतिवेशिनो विषण्णाः। किंकर्तव्यविमूढोऽभून् महेन्द्रः। परन्तु हा, राकेशस्तस्य पत्नी च! मन्ये प्रमोददिनमिदमासीत्तयोः। येनचनोक्तमासीदनयोर्मध्ये—'यदि द्राक्तराणां पत्न्योऽप्युपचारैर्जीवेयुस्तदा को वा देयादेभ्यः स्वकर्मणां फलम्?"

महेन्द्रस्य चक्षुषी रक्तमिवाऽवर्षताम्। किं कदाऽपि स प्रतिशोधे क्षमो भविष्यति?

× × ×

तदैव सुरेन्द्रो विद्यालयात् परावृत्तः।

'किं सुरेन्द्र! राकेशः प्राध्यापकः सञ्जातः?"

'अथ किम्, अस्मत्कक्षामपि सोऽयमध्यापयिष्यति श्वः।"

"त्वत्कक्षामध्यध्यापयिष्यति ? राकेशः ?" क्रोधान्धोऽय निरसरद्वहिः ।

×                    ×                    ×

मभयस्त्वरितया गत्या निःसरति ।

तद्दिने बालातपस्यारुणिम्ना सहैव सुरेन्द्र समुदतिष्ठत् । अय महेन्द्र प्रभातादेव श्रान्त इवाऽदृश्यत । नायमजानात् किमित्येतावान् श्रमोऽस्य । यदा सुरेन्द्रो बहिर्गन्तुं वस्त्राणि परिधातुमारभत, तदाऽप्राक्षीन्महेन्द्रः—

"अद्य त्वम् काशदिन सुरेन्द्र ! किमित्ययं गमनोद्योग प्रातरेव ?"

"अद्य सरित्तटेऽस्मत्कक्षायाः सम्विः समायोजिता । सर्वमपि दिन तस्यामेव व्यत्येष्यति ।"

"सरित्तटे ? के के गमिष्यन्ति तत्र ? प्राध्यापका अपि ?"

"नैव, केवलं विद्यार्थिन एव ।"

"गच्छ । पर प्रावृषो दिनानि सन्ति । सरितः प्रवाहो वेगवान् स्यात् । सतर्क. स्नायाः ।"

सर्वा सामग्रीं सहादाय निरगात्सुरेन्द्र, सत्यैक एव सुतः किशोर, किन्त्वतीव मेधावी । सर्वप्रायम्य कक्षायामस्य विशेषः स्वभावः । हन्त ! यद्येतस्याद्य माताऽभविष्यत् । महेन्द्रोऽद्यापि स्मरति तत् दिन यदा सा दुग्धमुखमिमं शिशुं तस्मै समर्प्य सर्वदार्थं सुष्वाप । तद्दिनादारभ्य महेन्द्र एवाऽस्य माताऽस्ति । मित्रैर्बहुं द्वितीयविवाहप्रस्तावमेतदर्थमेवाऽसौ नानुमेने । कियता काठिन्येनाऽसौ पालित शिशुरस्य कैशोर्यं व्यतिगमय्य यौवने पद निदधाति । व्यतिगतः सोऽपि समयः ।

दीर्घमुष्णं च निःश्वस्य महेन्द्रश्चिरविस्तायन्त्रमुत्थाप्य बहिरायात् । महत्तरयन्त्रमागतम् । निरगान्महेन्द्रः ।

×                    ×                    ×

समग्रमपि दिन नित्यनवीनानां, पांसुलानां, दुर्गन्धमुद्वमतां कङ्कालशेषाणां रोगिणां दुःखगाथां निशम्य मध्याह्ने विश्रामसमये पुनः परावर्तत गेहं महेन्द्रः । अयैकाकिनाऽनेन भुक्तम् । केवल सुरेन्द्रो यदाकदा भोजनसमये उपस्थितो भवति । अन्यथा एकाक्येवासौ भुङ्क्ते । अरुणायाश्चित्र सम्मुखे एव लम्बमानम् । अद्येदमपि विषण्णमिवाऽवलोक्यते ।

साय पुनर्निरगान्महेन्द्र । मार्गे राकेशो दृष्ट । एतस्य स्वास्थ्यमद्य सुन्दरतरमिवाऽऽसीत्। सरभस वायुशकल ( बाइसिक्ल ) मारूढोऽसौ मरुत्तरशकटिसमीपान्निर्जगाम। महेन्द्र दृष्ट्वा घृणा-क्रोध-तिरस्कारादिभावशबला सभ्रूकुचनां फूत्कृतिमिव विसृज्याऽय मुख परावर्त्तितवान्। महेन्द्रस्य विद्रोहि हृदय चीत्कारमकरोत्। क्रोधाविष्टोऽसौ न शशाक गन्तुमौषधालयम्। गृहमय परावर्त्तत। शकटिं शकटकोष्ठे (गैरेज) विसृज्याऽय कतिपयक्षणपर्यन्त चिन्तयन्नस्थात्। गृहस्यालिन्दे भृत्य. शयानोऽभूत्। साश्चर्यमय समपश्यत्कोपकलुष महेन्द्रस्याननम्—गद्गदगिराऽयमपृच्छत्—"अद्य न गमिष्यति भवानौषधालयम्?"

"नैव।"

दीर्घदीर्घै. पदन्यासैरय गृहाद् बहिर्निरगात्।—

मार्गे राकेशस्य गृहमपतत्। गृहकोणाद्राकेशस्य पत्न्या अव्यक्तनादः समागच्छन्नासीत्। क्रोधान्धो महेन्द्रो गृहस्यास्योपरि जुगुप्सितां दृशमेकामवपात्य धूमवर्त्तिकामज्वालयत।

भ्रमणेऽप्यय नाऽधिक समय प्रदातुमशक्नत्। शीघ्रमेव गृह परावृत्य प्राचीनानि पत्राणि द्रष्टुमारेभे।

× × ×

प्रकाम परिश्रान्तो राकेशः सायं गृह परावर्त्तमानोऽभूत्। यस्याऽऽननोपरि विलक्षणता मूर्त्तिमतीव नृत्यति स्म। परीक्षाभवनान्निःसारित परीक्षार्थीव स शनै शनैर्मन्दया गत्या गृह प्रति रिङ्गमाणोऽभूत्। अस्ताचल चुम्बतो मरीचिमालिनोऽरुणिमेव तस्य मुखमुद्राऽपि मन्दमन्द मालिन्यमस्पृशत्। सेऽयमभूतपूर्वा विलक्षणता कञ्चन गूढं पश्चात्ताप पिशुनयति स्म। अथ रथ्यायां स कोलाहलमिवाऽश्रौषीत्। पश्चिम व्योम प्रगाढ लोहितमिवाऽऽलोक्यत। इतस्ततो लोका धावन्त इवाऽदृश्यन्त। नवीना काचन घटना जातेत्यनुमानमकरोदसौ। तस्यैव प्रतिवेशात्स्वल्पः कलकल इवाश्रूयत। सहसा तस्य हृदयमातङ्कित समजायत। काचन महती दुर्घटना जातेति तस्यान्तर चीत्कारमकरोद्वर्णितमेव। दीर्घदीर्घतरेण पादन्यासेनायं गृहं प्रति मुखमावर्जयत्। तस्य नयने अवेगभराद् विस्फरिते एवातिष्ठताम्। स स्वात्मनि विश्वासमपि कर्त्तुं नाशक्नत्। धू धू-रवेण तस्यैव गृहं प्रज्वलदासीत्॥ दूरादेवाऽऽसौ गात्रस्तम्भमन्वभवत्।

सकृत्सातङ्कोऽसौ दीनां विहङ्गमदृशं भवनोपर्यपातयत्। वह्निशिखाश्चन्द्रशालामस्पृशन्। उपरिखण्डे रथ्याभिमुखस्य प्रकोष्ठस्य वातायनं भक् भगिति धूममुद्वमदासीत्। भित्तीनां भेदस्य कटुशब्देन सह कपाटानां प्रज्वलनस्य हृदयविदारको रवोऽपि श्रूयमाणोऽभूत्। रथ्यायां संभूता बहवः प्रतिवेशिनो राकेशं प्रति हस्तावुत्तानीकृत्याऽस्पष्टया गिरा यत् किञ्चिन् प्रजल्पन्तः समदृश्यन्त। तेषामस्पष्टशब्दो राकेशस्य श्रुतिगोचरो नाऽभूत्। सोऽयमद्भुतस्यास्यानुभवस्य प्रत्यक्षीकरणं कुर्वन्नासीत्। तस्य गृहं तत्समक्षमेव दह्यमानमासीत्। अद्य-यावत्स नाद्राक्षीत्कस्याऽपि भवनं दह्यमानम्। गृहाणां दहनसमये किं वा कर्तव्यमिति नाऽपारयदयं निर्धारयितुम्। चक्षुषी विस्फारिते; श्वासोच्छ्वासौ वेगितौ, वह्निशिखानां शोणिमा तद्वदने, वस्त्रेषु च प्रतिबिम्बितः। स्तम्भित इवाऽसौ स्थितोऽभूत्। मस्तिष्के कस्यचन तीव्रविषस्येव प्रभावोऽभूत्। किङ्कर्तव्यविमूढोऽसौ स्तिमितं स्थितो वातायनात्सरभसं निर्गच्छन्तं धूमं वीक्षमाणोऽभूत्।

सहसाऽस्य स्मृतिपथमुपारोहत्—यद् वातायनस्याध एव सर्वा-रायस्य पुस्तकानि निहितानि सन्ति। सवेगमसौ तानि संरक्षयितुम-धावत्। कतिपयपदानि पुरः प्राचलत्स। परं तस्य पादावकम्पताम्। पुनरस्थादसौ तत्रैव। बहिर्द्वारस्य तोरणं चटात्कृत्य भूमावपतत्। धूमेन सर्वमपि द्वारमाच्छाद्यत। तस्य सुहृद् राजेन्द्रः स्वभवनस्योपरि सवेगमारुह्य राकेशं प्रति किञ्चिदव्यक्तमक्रन्दत्। परं राकेशः श्रुत्वाऽपि नाशृणोत्। सहसैव स स्वपत्न्या अस्मरत्। सहसाऽस्य वदनाच्चीत्कारो निरसरत्। स क्रन्दितुमैच्छत्—"हन्त! रक्षत मत्पत्नीम्" परं स निर्णेतुं नाऽपारयद्यत् कं वा शब्दं समुच्चारयेत्स प्रथमम्। सोऽयमन्वभवद्यन्नाधुनाऽहं स्थातुं शक्नुयाम्। व्यतिकरग्रस्तोऽसौ निर्भरमुपाऽविशत्तत्रैव रथ्यायाम्। तस्य संमुखमेव स्फुलिङ्ग एकः सशब्दं धरणावपतत्। तमिममुत्थापयितुमवाञ्छदसौ। अयमपश्यद्यत् पृष्ठतो भूयांसः प्रतिवेशिनः संभूतास्तारस्वरेण राकेशं संबोध्य किंचिदुदीरयन्ति। राकेशो न किमप्याकर्णयत्। मन्ये श्रवणशक्तिरेव विलीना तस्य। जनसम्मर्देऽस्मिन् पृष्ठतः सातङ्कमेकं मुखमयमपश्यत्। विदारितनेत्रेणाऽनेन बहुकालाऽनन्तरं स्मृतं यन्महेन्द्रस्यासीदिदं मुखम्। कतिपये जना महेन्द्रं पर्यवारयन्। स नितान्तं शोकाकुलः

किमपि समवोचत्। सर्वे दह्यमानस्य तस्य गृहादवधानं विकृष्य महेन्द्रेण सह वार्त्तालापमारभन्त।

तारघण्टारवं प्रकुर्वन्त मरुत्तर शकटमेकमयमपश्यत्तत्र। लोकान् कर्णयोर्नेत्रयोश्च यन्त्राणि परिधाय तस्य गृहोपर्यारोहणाय प्रयतमानानपश्यदयम्। सकरुण करमुत्थाप्य तेभ्यः प्रावोचदसौ मनस्येव—"उपरि पत्नी मे शयानाऽस्ति। कृपया संरक्षत ताम्।" पर सोऽनुवभूव यत्कोऽपि नाऽश्रृणोत्तस्य वाणीम्। वह्निग्नतर तस्य चेत सम्प्रत्यपरस्मिन् कस्मिंश्चन भुवने प्रस्थितम्। स व्यस्मरदात्मनो भवनं दह्यमानम्। अतीतस्य घटनाः स्मृतिपथमुपारोहन्ति स्म। आत्मनो विवाहमसावस्मरत्, पत्नीम्, पितरम्। विवाहानन्तर प्रायो वत्सरद्वय व्यतीतमासीत्। एकदाऽस्य पत्न्या उक्तमभूत्—"राकेश, अन्विष्ट मया नामधेय भुभूपोः शिशोः। यद्य बालकस्तर्हि नामधेय 'रजनीकान्त.', यदि बालिका तर्हि 'रजनी'।" तदैव तस्याः कपोलतले प्रेम्णा मह्लचानयम्। किन्तु साम्प्रत नासी निर्णेतुमपारयत्—को वा समुत्पत्स्यते, बालो वा बाला वा।

पृष्ठतो दीर्घमेकस्य स्वर श्रुत्वा भावजगतः प्रत्यावर्त्ततायम्। आसीत्कश्चित् पृच्छन्—"किं सुरेन्द्रो नद्यां निममज्ज ?" "कीदृशं दुर्भाग्यपूर्णमिद दिनम् ?" राकेशो मुख प्रत्यावर्त्तयत्पृष्ठतः। महेन्द्रो दूरं स्थितोऽभूत्, नि स्पन्दो, विषण्ण। सर्वेऽपि प्रतिवेशिन एकत्र समेता' समालपन्।—लोकानां भग्नशेषां वाचमयमश्रृणोत्—

"सायं गत.। सरित्तटे। नद्या प्रवाहो वेगवान्। तरणाय यहव-इच्छाना—वेगेन पदम् अस्खलत्—न जाने कथम् ?—तरणं नाऽजानान्—कश्चन प्रत्यभिघातम् अदात्—प्रयत्ना असफला अभूवन्। न्यमज्जत्।"

सुरेन्द्रस्याऽऽकृतिरस्य चक्षुषोरनृत्यत्। कांचन घटनां पुनरस्मरदयम्। अतीवोत्पाती सुरेन्द्र। कक्षायां वहिं यमदूभ्यां नयनाभ्यामय तं पश्यति। स तस्याज्ञां सर्वदाऽवहेलयति।

दह्यमानस्य भवनस्योपरि प्रकोष्ठात्पत्नीमानयन्त केचन जना दृष्टा अनेन। किन्तु सा मृतेव प्रतीयते। किमियं जीविष्यति ? 'कालिन्दी जीविताऽस्ति किम् ?' अयमपृच्छत्। सर्वे जनास्तां द्रष्टुं गता। न कोऽपि शृणोति।

× × ×

पृष्ठतः कस्यचन पदध्वनिरुत्तिष्ठति। "कोऽयम्? राकेशः?" मन्दया विषण्णया च वाचा कश्चन पृच्छति।

"त्वम्? महेन्द्र!"

अपरा छाया शनैरुपसृत्य महेन्द्रस्य निकटे निषीदति। द्वयोरेव हृदये शान्ते स्तः। प्रतिहिंसायाः कृशानुरधुना भस्मशेषः।

"सुरेन्द्रोऽस्यामेव नद्यां निममज्ज, राकेश। त्वं जानासि, स एव मम एकमात्रम् " कण्ठो गद्‌गदो भवति।

"सर्वमपि मद्‌गृहं वह्निसादभूत्। महेन्द्र, कालिन्दी तस्मिन्नेव गृहे। तामहं जीवयितुं नाऽपारयम्। तया सहैव मदीय शिशुरपिदग्धः। किन्तु स न तदानीं जन्मापि लब्धवानासीत्।"

विषण्णा छाया किंचिद्विचारयति। शब्दा न निःसरन्ति। कतिपयक्षणानन्तरं श्रूयते—

"तव गृहं मयैव दग्धमासीत् राकेश। आसीत्स प्रतिशोधवह्निः। मां दृष्ट्वा त्वया फूत्कृतमासीत्। तदाऽहमौषधालयमपि गन्तु नाऽपारयम्। भ्रमणाय निर्गतेन मया त्वद्‌गृहस्य पृष्ठतो बहूनि वस्त्राणि लम्बमानानि दृष्टानि। नाऽऽसीत्तत्र कश्चन। मया धूमवर्तिकया सहैव तेष्वप्यग्निसंयोजनमकारि।"

हन्त! प्रतिहिंसाया वैशसम्। त्वदीय सुरेन्द्रो महान् धूर्तोऽवलिप्तश्चाऽभूत्। उद्धृतस्त्वमेतावान् ।"

राकेशः सर्वा अपि घटना स्मरति। कथं सुरेन्द्रस्तत्र कक्षाया प्रतिदिनं मौद्धत्यमनुष्ठितवान्। कथं तेन सर्वेऽपि छात्रा राकेशस्य विरोधिनो विहिता। कथं तेन राकेशस्य विरोधे लिखितं स्तुतिपत्रमध्यक्षाय प्रेषितम्। कथं च बहुधा तेन सकटाक्षमुदीरितम्—'अहं मत्पितुः कलङ्कस्य पूर्णं प्रतिशोधं ग्रहीष्यामि। एतस्य नरपिशाचस्य सेवातो निष्कासनं दृष्ट्वैव मम शान्तिर्भवेत्।" कथं राकेशस्य निकटसम्बन्धी एकश्छात्रोऽपि तस्यामेव कक्षायामधीयानोऽभूत्। कथंतस्य सुरेन्द्रेण सह कलहः संजातः। तमेव प्रतिबोध्य सन्धिदिवसे सुरेन्द्रं नद्यां पातयितुं योजना कथं राकेशेन विहिता। कथं तेन सुरेन्द्रः पातितो नद्याम्। कथं च तं संपात्य स स्वयमपि संभ्रमविमूढः समभवत्। किन्तु सुरेन्द्रो निममज्जैव।

"मम सुरेन्द्रो नास्ति साम्प्रतं संसारे। तस्य भविष्यत्—उज्ज्वलमासीत्, राकेश।"

"अहमपि जानामि। किन्तु, आसीन्मे क्रूरो व्यामोहः अपराधस्य दण्डो ऽत्रैव मिलति। शीघ्रम्, अवश्यमेव मिलति। मया विस्मृतमासीत्।"

निशीथिन्या अवदाते चन्द्रिकाचये द्वावपि शत्रू मित्रत्वमापन्नौ स्त। अतीतस्य घटना सजीवा भूत्वा सस्फुरन्ति। शैशवस्य सख्यं पुनः स्थापितमस्ति। दुःखगाथामन्योन्यं श्रावयित्वा हृदयं शान्तिमनुभवति।

"सम्प्रति सर्वथैवाऽऽवां विपण्णौ द्वावपि।"—महेन्द्रो ब्रूते। राकेशः शुष्कं मन्दहास्यं हसति। हास्येऽस्मिन् सर्वनाशस्य करुणक्रन्दनमिव निलीनम्।

"अधुना द्वावपि निश्चिन्तौ, निर्भयौ," ... राकेशो बाहू प्रसारयति।

सुदूरं तरुतलादुलूकस्य गंभीरो ध्वनिरुत्तिष्ठति। मन्दिरस्य दीपकं साम्प्रतमपि प्रज्वलितमस्ति। सरित्तथैव सशब्दं वहति। नद्या नीरे प्रतिफलन् विशदवदनः कलानाथः शनैः शनैः कम्पते।



# आदर्शकन्या सुकन्या

श्रीनवलकिशोरशर्मा काङ्करः

( जयपुरीये पारीककोलेजे संस्कृतविभागाध्यक्षः )

पुरा वैवस्वतमनोः सुपुत्रः शर्यातिर्नाम निरवद्यरूपो भूपो बभूव। सत्यपि तस्य अनल्पे अन्तःपुरपरिजने केवलमेकां कन्यामतिरिच्य नाजायत काचिदन्या सन्ततिः। अतः सा सर्वेषां जनानां मनांस्यधिचकार। आसीदपि सा सर्वाङ्गसुन्दरी मधुरभाषिणी च। विप्राणां परामर्शेन राजा तस्याः "सुकन्या" इति नाम विदधे।

राज्ञः राजधान्याः समीपमासीदेकमरण्यम्। तत्र हंस-चक्रवाक-चातक-सारसादि-खगकुलैः सेव्यमानो व्यराजतैकः स्वच्छजलः सरोवरः। एकदा राज्ञोऽपि मनसि तत्रत्यां प्राकृतिकच्छटां द्रष्टुमुत्कटेच्छा समुदियाय। सपरिवारश्चासौ स्वकन्यां सुकन्यामादाय तत्स्थानं प्रतस्थे।

इतश्च तद् वनमेकान्तस्थानं ज्ञात्वाऽत्र भृगुमुनेरात्मजो महात्मा च्यवनः कतिपय-वर्षेभ्यः कठिनं तपश्चरति स्म। अस्य सांसारिक-पदार्थेभ्यो दृष्टिः सर्वथा दूरं गतैवाऽभूत्। प्राणवायुं निर्जित्य, इन्द्रियाणि निगृह्य, मौनं समालम्ब्य चैकाग्रचित्तेन जगन्नियन्तारं परमात्मानं ध्यायति स्म। बहुकालमेकत्रैवोपवेशनेन लतास्तमाच्छादयन्, कीटिकाश्च तस्मिन् वल्मीकं विदधिरे। इत्थमभित आवृतो महात्मा सर्वथा मृत्पिण्ड इव जनैरभ्यज्ञायत।

वन-शोभाऽऽकृष्ट-चित्ते पितरि कुसुम-सुकुमारी राजकुमारी वत्सार्धमपहाय स्वसखीभिः खेलन्ती हसन्ती च तद्वल्मीकाभिमुखमागत्य सहसाऽतिष्ठत्। तत्र हि अन्तःस्थ-च्यवनस्य नयने सुकन्यां विस्मय-सागरे न्यमज्जयताम्। "किमेतद् दीव्यन् विचित्रं वस्तु ?" इति जिज्ञासमाना राजकुमारी कण्टकेन तद् वस्तु बहिर् निःसारयितुं प्रायतिष्ट। एतद् दृष्ट्वा मुनिरब्रवीत्—"अयि सुन्दरि ! किमेतत्त्वङ्करोषि ? अयन्त्वहं च्यवनः। इयं ते चेष्टा नितरां पीडयति माम्।" परन्तु तस्या ध्यानं तत्र गतमेव न। तच्चेष्टया ऋषि-नेत्रे प्रस्फुटिते

अभूताम्। नेत्राभ्यां रक्तधारा प्रावहत्। महात्मा असह्य वेदनया भृशं चक्रन्द चुक्रोध च।

"अद्य तपस्वी च्यवनः क्रुद्ध" इति श्रवणकालोपरमे राजा शर्यातिः सर्वाननुचरानाहूय महर्षेः क्रोधकारणं पप्रच्छ। परन्तु सर्वेषां "वयं वस्तुस्थिते सर्वथा अपरिचिताः स्म" इत्येवोत्तरमासीत्। अत्रान्तरे समागतया राजकुमार्या तत्र सर्वं स्पष्टीकृतम्।

राजा सत्वरमुत्थाय मुनेरन्तिकं जगाम, मुनिवरं च वल्मीकाद् बहिर्निःसार्य साष्टाङ्गं प्रणमन्नुवाच—"भो जगद्वन्द्य तपस्विन्! मम पुत्र्या आज्ञानवशादिदं महदपराद्धं भवत, तस्याः वयः सुलभं चापल्यं चालोच्य क्षन्तुमर्हति भवांस्ताम्। क्षमैव खलु महात्मनामलङ्कारः।" राज्ञो दीनवचनं निशम्य मुनिरब्रवीत्—"हे राजन्! युक्तमुक्तं त्वया। मया शापस्याक्षरमेकमपि नोक्तम्। अहं वृद्धोऽस्मि, पुनश्च नेत्रविहीनो जातः। को मामन्धं सेविष्यते? कथमहं भगवद्-भजनं निर्विघ्नं करिष्ये?" राजोवाच—"मुनिवर्य्य! मे सहस्रशः सेवकाः श्रीमतां सेवाङ्करिष्यन्ति, अतः अनुगृह्णातु तत्र दयानिधिर्भवान् माम् न महात्मनां क्रोधोऽधिककालं तिष्ठति।"

राजानं तत्पुत्रीं च दण्डयितुमिच्छन् ऋषिरब्रवीत्—"नहि नहि, यः परपीडामात्मवत् प्रत्येति, स एव शुद्धहृदयेन सेवितुं शक्नोति। वेतनभोगिनां ते सेवकानां को विश्वासः? अन्धसेवनमपि तपस्यैका। यदि सत्यं ते पश्चात्तापः क्षमायाचनञ्च, तर्हि स्वकन्यां मया सह विवाह्य मां सन्तोषय। आत्मकृत्ये पश्चात्तपन्ती विवाहबन्धने च पतिता सा यथा मां सेवितुं शक्ष्यति तथा नान्यः। न त्वया वंशपरम्पराभङ्गः शङ्कनीयः। अहमस्मि सदभिजातो ब्राह्मणः। ब्राह्मणाय क्षत्रिये कन्या प्रदेया इति शास्त्रसम्मतम्। सन्त्यत्र अनेकश इतिहासे उदाहरणानि" इति।

मुनेरतर्कितवचः श्रुत्वा नृपतौ वज्रं पपात एव खलु। न स्वीकर्तुं न च निषेद्धुमेव शशाक सः। दीर्घं निःश्वस्यासौ व्यचिन्तयत्—"वृद्धेनान्धेन पत्या कथमात्मन एकाकिनीं प्रियपुत्रीं विवाहयेयम्? यौवनमधिगता कथमियं स्वसतीत्वं सुरक्षिष्यति? रूपयौवनसम्पन्ना गौतमपत्नी अहल्यैव यदाऽऽत्मनः पातिव्रत्यं रक्षितुं न शशाक—इन्द्रजाले पतितैव, का कथा पुनर्मम पुत्र्याः? मुनिर्यत्कुर्यात् तत्कुर्यान्नाम, नाहं जानन् बुध्यमानोऽपि मारामिरामवर-वरर्णीयां स्व तनयां

स्थविराय प्रदास्यामि" इति निश्चित्य राजधानीमागतो राजा मन्त्रिभिरेतद्विषये परामर्शञ्चकार। मन्त्रिभिश्चापि स्वस्वामिनः कथनमेव समर्थितम्। परन्तु कस्माचित् कारणात् तत्रायाता राजतनया पितरमित्थमबोधयत्—"भो पितः! साम्प्रतं महर्षेराज्ञापालने एव सर्वेषामस्माकं श्रेयः, अन्यथाऽसौ महात्मा शप्त्वा सर्व्वेषु महासङ्कटं पातयितुं शक्नोति। ध्येयम्, न भवान् ममैकाकिन्याः पिता, अपितु प्रजानामपि, तासु विपत्त्यां सत्या प्रजाकष्टश्च च भवान् घोरपातकी भविता। न मत्कृते प्रजाः विनश्यन्तु। अहं ससन्तोषमनन्यभक्त्या त वृद्धपतिं सेविष्ये। यस्य चरणयोर्महामहान्त सम्राजोऽपि शिरो नमयन्ति—तस्य धर्मपत्नी भूत्वा आत्मानं सौभाग्यवतीं मस्ये।"

इत्थं पुत्रीवचनैः समन्त्रिगणः सन्तुष्टो राजा यथाकालं सुकन्यां महर्षि च्यवनं व्यवाहयत्।

सुकन्या मनसा वाचा कर्मणा वृद्धमन्धं पतिं सेवमाना जीवनस्य कतिपय-वर्षाणि ससुखं यापयामास।

एकदा सरोवरे स्नात्वा आश्रमं प्रत्यागच्छन्त्यां सुकन्यायां स्मराभिरामयोरश्विनीकुमारयोर्दृष्टिर्निपतिता। तस्या अनुपमेन लावण्येन मुग्धौ तौ तामुपेत्य कतिचन प्रश्नान् पप्रच्छतुः—"को नु पुत्रः पिता भ्राता भर्त्ता वा ते सुमध्यमे?" इत्यादि। परं सा तु तयोर्हार्दिकमजानन्ती सर्व्वमपि निष्कपटमुदतरत्। तावूचतुः—"आवां देवकुमारौ स्वः, अन्धेन वृद्धपतिना किं ते प्रयोजनम्?" इति। साम्प्रतं सुकन्या तयोरभिप्रायं बुबुधे, तिरस्कुर्वती च तावब्रवीत्—"भोः भवन्तौ किं न लज्जेते? भास्करः पिता भगवान् नारायणः सर्व्वमपि भवदाचरणमुपरि विलोकयति, न शोभन्ते ईदृशानि वचनानि भवन्मुखात्। देवत्वस्य दुरुपयोग क्रियते भवद्भ्याम्। यदि स्वीयं कल्याणमिष्यते तर्हि दूरं गन्तव्यं भवद्भ्यामितः। न कदाचिद् शापभाजौ भवेताम् भवन्तौ।"

वराकौ भीतावश्विनीकुमारौ प्रसङ्गपरिवर्त्तनं कृत्वा ऊचतुः—"अयि राजकुमारि! त्वद्वचोभिः सन्तुष्टावावां देववैद्यौ ते वृद्धपतिमात्मसदृशमेव अनुपमं युवानं चिकीर्षाव। पश्चादस्मासु त्रिषु कमप्येकं वृणीष्व।" आसीदत्रापि स्वार्थमात्रा। परमस्तु तावत्। सुकन्या पतिमुपेत्य सर्वं तस्मै न्यवेदयत्। सोऽब्रवीत्—"देवकुमाराव-

आनय, सम्प्रति तद्वचोऽनुसरणमेव वरम्, पश्चाज्जगदम्बा स्वसाहाय्यमवश्यङ्करिष्यति।" गूढविचारौ देवकुमारौ च प्रतिज्ञानुसार महर्षिमपि स्वसदृशं शरीरिणं कृत्वा त्रिषु कस्याप्येकस्य वरणाय सुकन्यामूचतुः। सुकन्या तु त्रयाणामेकरूपं दृष्ट्वा किङ्कर्त्तव्यविमूढा जाता, "कथमहमात्मन पतिदेवं परिचिनोमीति निरवलम्बा सती जगदम्बां स्वपतिदेवप्रदानाय प्रार्थयामास। भगवतीतु तस्या पातिव्रत्येन सन्तुष्टान्तःकरणा सती तस्यामीदृशीं दैवीं शक्तिं जनयामास —यया सा आत्मन पतिदेवं पूर्णं परिचिकाय, उवाच च—"देवकुमारौ! अयमस्ति मे पतिः, अहमेनं वृणोमि, न भवन्तौ।" वराकौ देवभिषजौ निराशौ भूत्वा आत्मनो मार्गं जगृहतु।



# श्रीमान् शास्त्री महोदयः

श्री नारायणशास्त्री काङ्कर एम० ए०

( प्राध्यापक आयुर्वेदिककालेज—जयपुरम् )

मम गृहोपकण्ठम् एव एकः ब्राह्मणपरिवारः निवसति। तत्रत्यः गृहस्वामी 'शास्त्री' इति नाम्ना आबालवृद्ध विख्यातः अस्ति। सन्ति तस्य महाराजदशरथवत् चत्वारः तनयाः। सर्वे अपि वयस्काः वर्त्तन्ते। तेषु प्रथमः डाक्तरः, द्वितीयः वाक्कीलः, तृतीयः वैद्यः, चतुर्थः च अधीयानः अस्ति। एका कन्यका अपि विद्यते—या साम्प्रतं पुत्तलिकाभिः एव क्रीडति। यद्यपि गृहस्वामी पञ्चसु विषयेषु प्राप्ताचार्योपाधिः एम० ए०—पदवीधरः च वर्त्तते, तथापि असौ आत्मनः 'शास्त्री' इति सम्बोधनेन एव सन्तुष्यति।

एकदा सायम् अवकाशकाले तद्गृहं गतः अहं वार्त्ताप्रसङ्गे तम् अप्राक्षम्—"महाशय! आचार्योत्तीर्णः अपि भवान् एम० ए०—परीक्षाम् उत्तरितुं कथम् आवश्यकताम् अनुभूतवान्?" इति। असौ तु उष्णं निश्वस्य गभीरया दृष्ट्या मां पिबन् इव अवोचत्—"हन्त! पापि जठरं किं किं न कारयति! यदि वर्त्तते सत्यम् एव कुतूहलं तर्हि श्रूयताम्। कथा इयं यद्यपि विस्तृता, तथापि सक्षेपतः एव सूचयामि" इति। 'अनुगृहीतः अस्मि" इति उक्त्वा सञ्जाते मयि सोत्कण्ठं श्रवणपरे शास्त्री महोदयः अवादीत्—

"महाशय! यदा प्रथमश्रेण्या पञ्चसु विषयेषु आचार्यपरीक्षोत्तीर्णः अपि कृतबहुप्रयत्नः अपि न क्वचित् सर्वकारीयां वृत्तिम् अलप्सि, परिवारपोषणं च दुर्भरं जातं, तदा मित्राणां प्रेरणया युगगतिं च वीक्ष्य एम० ए०—परीक्षाम् उत्तर्तुं कृतनिश्चयः अहं सर्वप्रथमं मैट्रिकपरीक्षां दातुं समुद्यतः अभवम्। अस्यां परीक्षायाम् आङ्गलभाषाविषयं परित्यज्य सर्वेऽपि विषयाः मदर्थं स्वतः अधिगम्याः सरलाश्च अवर्त्तन्त। आङ्गलभाषा तु मह्यम् अतीव दुर्बोधा आसीत्। कृतप्रयत्नः अपि अहं तां हृदयङ्गमां कर्तुं न अपारयम्। तद्भाषायाः प्रत्येकशब्दः वर्त्तनीं दृष्ट्वा रुदनीयः आसीत्।

वर्त्तनी-प्रकारः अपि आङ्गल-भाषायाः अतिविचित्रः अनुभूतः मया। यतो हि तत्र अनेकत्र एवंविधा वर्णा विद्यन्ते—ये लिख्यन्ते अन्य-प्रकारका—उच्चार्यन्ते च अन्य प्रकारकाः। यथा But = बट, Put = पुट इत्यत्र एव विलोक्यताम्। क्वचित् तु शब्देषु वर्त्तन्यां लिख्यमाना अपि वर्णाः नैव उच्चार्यन्ते—यथा Walk = वाक इत्यत्र। वर्णस्य उच्चारणं न भवति। क इह हेतुः?' इति वारं वारं चिन्तयता अपि मया न समाधानम् उपलब्धम्। अस्मिन् विषये प्राप्त-D. Litt. पदवीका महामहान्तः प्राध्यापका अपि पृष्टा—किन्तु तत्र अपि मौनम् एव आलम्बितम् अवालोक्यत। किं कथयानि? अद्य यथाकथञ्चित् एम० ए०—परीक्षाम् उत्तीर्य अपि आङ्गल-भाषा-शब्दानां पूर्वोक्तस्य वैचित्र्यस्य विषये आङ्गलप्राध्यापकेभ्यः अनधिगत-समाधान एव वर्ते। आङ्गल भाषा विषयकं व्याकरणम् अपि अत्र न किञ्चित् निर्दिशति। अपि नाम मम कथनम् असत्यम्?" इति असौ मां साभिप्रायम् अप्राक्षीत्।

मया तु "सर्वथा सत्यं भाषते भवान्, इदं शब्द-वर्त्तनी-वैचित्र्यम् अनेक-वारं बौद्धिकानाम् अपि बुद्धिं जडीकरोति" इत्येवम् अनुमोदितो असौ माम् अग्रे अभाषत्—'महाशय! एम० ए०-परीक्षोत्तीर्णत्वात् अवश्यम् एकस्मिन् महाविद्यालये संस्कृत-प्राध्यापकता हस्तगता। ततः एव आर्थिक—दुरवस्थायाः दुःस्थितिः समजनि। पुत्रेषु एकः डाक्टरीम्, द्वितीयः वाकीलताम्, तृतीय येनविद्यां याम् अशिक्षत—तत्सर्वम् आर्थिक स्वस्थतायाः एव फलम्। सम्प्रति तु तद्—विश्रान्ति वृत्त्या तनयानां च आयेन गार्हस्थ्य शकटः समयानुरूपं सम्यक् प्रचलति' इति।

अहं तु मध्ये एव अप्राक्षम्—महोदय! विद्वांस वदन्ति यत् 'संस्कृतं सर्वासां भाषाणां जननी' इति। अत आङ्गल भाषया अपि तत्पुत्र्या भवितव्यम्। कथयतु भवान्। अत्र भवत किम् अभिमतम्?' इति। 'अत्र कः सन्देहः? वर्तते एव तथा' इति स सपदि उदतरत्। मया तु पुनः पृष्टम्—'महाशय! यदि एवम्, तर्हि संस्कृत-व्याकरणेन अवश्यं भवेत् आङ्गल-भाषया सम्बन्धः।' इति। 'कथं न? तेन व्याकरणेन तु पूर्वोक्तस्य आङ्गल भाषा शब्दानां वर्त्तन्या वैचित्र्यस्य विषये अपि सर्वाङ्गीण समाधानं कर्तुं शक्यते। संस्कृत-शब्दानाम् इव आङ्गल-शब्दानामपि प्रकृति-प्रत्यय निर्देशपूर्विकां सार्थकव्युत्पत्तिम् अहं दर्शयितुं शक्नोमि" इति शास्त्रि-महोदयस्य उत्तरम् आसीत्।

मम तु कुतूहल वृद्धिं गतम्। पुनरहं प्रश्नम् अकार्षम्—'महोदय ! यदि एवं तर्हि किं भवान् वर्णितानुरूपे कानिचन उदाहरणानि दातुं कृपयिष्यति ?" इति। असौ तु मन्दं विहस्य अवोचत—

'श्रूयतां यदि जागर्ति कौतुकम्। पूर्वोक्तः आङ्गलभाषायाः But = बट इति शब्दः संस्कृते विद्यमानः एव 'वत' इति अव्यय शब्दः अस्ति। संस्कृते 'वत' इति एव उच्चार्यते अतः आङ्गल भाषायाम् अपि But इत्यस्य उच्चारणं 'बट' इत्येव भवति,—ननु Put 'पुट' वत् 'पुट' इति। 'त'कारः आङ्गल भाषाया 'T' वर्णेन सूच्यते एव। अतः संस्कृतस्य 'वत' इति शब्दस्य उच्चारणम् आङ्गल-भाषाया 'बट' इति जायते। Put=पुट इत्यस्य उच्चारण But='बट' वत् न भवति, 'पुट' इत्येव भवति। तत्र कारणम् इदम् एव वर्तते यत् अयम् आङ्गल-भाषाया Put पुट धातुः संस्कृतभाषाया विद्यमान एव संश्लेषणार्थक संसर्गार्थक वा 'पुट' धातुः—न तु भिन्नः कश्चिन, अर्थः अपि द्वयोः समानः एव। तस्मात् आङ्गलभाषाया Put इत्यस्य उच्चारणं संस्कृतभाषायाः 'पुट' धातोः इव क्रियते—न तु But = बट इति रीत्या" इति।

शास्त्रि-महाशयान् But-Put अनयोः आङ्गलभाषा-शब्दयोः उच्चारण सम्बन्धे तर्कसङ्गत स्पष्टीकरणमाकर्ण्य अहं तु विस्मितः एव अभवम्, पुनरग्रे च निवेदितवान्—'महाशय ! अहम् अतीव प्रसन्नः अस्मि भवतः समाधानेन—किन्तु इदं तु उदाहरणम् उच्चारण-सम्बन्धे एव जातम्। कृपया व्युत्पत्ति-सम्बन्धे अपि कतिचन उदाहरणानि प्रदर्शनीयानि' इति।

सः अब्रवीत्—"श्रूयताम् आङ्गल भाषाया Cycle इति शब्दस्य व्युत्पत्ति। अस्य उच्चारणं 'साइकिल' इत्येव क्रियते जनाः। किन्तु एतद्-रहस्यं किम् ? भवान् अपि न जानाति। दृश्यतां तावत्, 'साइकिल'—नामा पदार्थः अत्र कीले सह भवति तस्मात् अयं 'साय कील' इत्येवं कथ्यते। 'साइकिल' इति तु अशुद्धम् एव उच्चारणम्। शुद्धं तु उच्चारणम् अस्य Cycle शब्दस्य 'सायकील' इति एव वर्तते। अपि च Barrister इति शब्दस्य अपि व्युत्पत्ति सर्वथा श्रोतुम् अर्हा एव। दृश्यताम्—वैरिभ्यः इष्टम् = अभिलषित राति = ददाति इति वैरि+इष्ट+रः = 'वैरीष्टरः'। कथ्यतां, किम्

एवं प्रकृति-प्रत्यय-निर्देश-पूर्विका सार्थिका व्युत्पत्तिः आङ्गलकोशेषु द्रष्टुं मिलिष्यति ? आङ्गलभाषायाः व्याकरणं वा एतत् साधयितुं शक्नोति ? अधिकं किं वच्मि ? आङ्गलभाषायाः Walk शब्द. अपि संस्कृतस्य एव चलनार्थकः 'वल्क' धातु· वर्त्तते । संस्कृते लकारः भवति अत. आङ्गलभाषायाः उक्ते Walk शब्दे अपि वर्णस्य वर्त्तन्याम् लेखनं क्रियते । यदि अत्र आङ्गलभाषायां ।वर्णस्य उच्चारणं न क्रियते तर्हि दोषः एव । अनुच्चार्यमाणः अपि लिख्यमानः वर्णः संस्कृतस्य एव आत्मानं सूचयति । अकार. आकारः वा आङ्गल-भाषायाम् 'a' वर्णेन एव सङ्केत्यते—अतः Walk इत्यत्र 'a' वर्णेन अकारस्य एव उच्चारण कृत्वा 'वल्क' इत्येव पठनीयम् । आङ्गलानां 'वाक' इति उच्चारण तु असङ्गतम् एव अस्ति । महानुभाव ! संस्कृत-व्याकरण तथा वैज्ञानिक स्वतः समृद्धं च वरीवर्ति यथा तेन समस्ता अपि आङ्गल-भाषा—एकाकिनी आङ्गलभाषा एव किमु-सकला अपि देशीया-विदेशीया भाषा अनायासं संस्कृतीकर्त्तुं शक्यते। अत्र अस्माक संस्कृत-व्याकरणं गौरव-स्थानम् । वृथैव जनाः तद् इद निन्दन्ति । "अशक्ता· तत्पदं गन्तुं ततः निन्दां प्रकुर्वते' इति सत्यम् एव अभिभाष्यते विपश्चिद्भि·" इति ।

अहं तु शास्त्रि-महोदयस्य संस्कृत-व्याकरण-द्वारा निर्दिष्टाम् आङ्गलभाषा-शब्दानां वर्त्तन्याः सार्थकतां संस्कृतीकरणस्य अप्रतिमां प्रतिभां च अनुभूय अतीव आश्चर्यचकित. अभूवम्, ससाधुवाद-दानं च तम् अहम् अवादिषम्—"विद्वद्वर्य ! सत्य भवतः पद्धतिः इयं सर्वथा उपादेया । अनया वस्तुत आङ्गलभाषा-शब्दानां वर्त्तन्याः अव्यवस्थायाः च सम्बन्धे जनै· विधीयमानाः आक्षेपाः सहज निरा-कर्त्तुं शक्यन्ते, विश्वव्यापिनी च सा भाषा नूनम् एव संस्कृतभाषया आत्मसात्कर्त्तुम् अपि प्रभूयते । अद्वितीया भवतः प्रतिभा-चमत्कृतिः । श्रोतुं तु अत्र विषये बहु अभिलषामि । परं साम्प्रतं समय. अधिकः सञ्जातः । अत. अग्रे दर्शनं भवतः पुन· करिष्ये । इदानीम् अनुजानातु भवान्" इति आपृच्छ्य गृहं सोल्लासं परावर्त्तिषि ।

•

# सहयात्री

श्री श्रीधरप्रसादपन्तः 'सुधांशुः' एम० ए०

( संस्कृते उदीयमान लेखक पोखीमोत वास्तव्य )

अन्तर्व्यूहस्य ( इण्टरव्यू ) प्रवेशपत्रमादाय श्रीनिवासः यावद्दिनं स्व मित्राणां गृहेष्वेव इतस्ततः परिभ्रमति। केनापि न दत्तानिपञ्चविंशति रूप्यकाणि। रात्रौ दशवादनवेलायां आपणिकेनैकेनोक्तम्—'महोदया, श्वः प्रातरेव दास्यामि रूप्यकाणि' इति।

लज्जामिश्रितेन सङ्कोचेन अपरस्मिन् दिने प्रातरेव तत्र गत्वा गृहीतानि तेन रूप्यकाणि। पुनस्त्रिचक्रिकामारुह्य धूम्रयानशकटविश्रामस्थले अगच्छत्। तत्र पूर्वादेव स्थितमासीच्छकटम्। श्रीनिवासः टिकटमादाय यदा तत्र गतस्तदा शनै शनैः धूम्रयानं चलितमासीत्। येन केनापि प्रकारेण कूर्दनं विधाय तेन शकटे संलग्ना लौह शलाका गृहीता। शलाकामादाय दोलायमानं तं विलोक्य सर्वे अकथयन्—'गत ! गतः ! मृत !'

किन्तु न जाने केनाकर्षितः स्वकीयेन सम्पूर्णेन बलेन कक्षे स। धूम्रयानस्य गतिस्तीव्रा अभवत्। स्वेदबिन्दुभिराप्लावित भयेन कम्पमानः श्रीनिवासः—समासनमुपविश्य स्वकीयेन धौतवस्त्रेण पुनः पुनः—स्वेदस्य प्रोञ्छनमकरोत्। यदा वायो सुशीतलेन संस्पर्शेण किञ्चित्कालानन्तरं प्रकृतिस्थोऽभूत्तदा पुरत उपविष्टां तमेव विलोकयन्तीमेकाकिनीमनन्यसुन्दरीमपूर्वपरिचिता नवयौवनामपश्यत्। एकदा चेष्टितं तेन सङ्कुचितेन मनसा कथयितु यत्—'महानुपकार कृत भवत्या। मम जीवनसंरक्षणं कृतम् अन्यथा तु मम जीवनस्य सन्ध्याकाल एवागत' इति। किन्तु तस्य वाणी न निःसृता। अकारणमेव पुनः पुन स्वकीयं मुखमेव प्रोञ्छतिस्म स। तस्य विचित्रामवस्थां विलोक्य समक्षे उपविष्टा नवयुवती सहजेन स्वरेणाकथयत्—

'अत्र व्यजनस्याध आगत्योपविशन्तु भवन्त' इति। तत्रोपविश्य महत्प्रयासेन कथितं तेन 'अयन्तु महिलाकक्षो विद्यते ?'

'आम्' अग्रिमविश्रामस्थले कक्षपरिवर्तनं कर्तुं प्रभवन्ति भवन्तः। चलन्तं धूम्रयानं विलोक्यापि आरोहणस्य प्रयासं विधाय महती त्रुटिः कृता भवता। कदापि ईदृशं कार्यं न करणीयम्।' शान्तेन स्वरेणाकथयत्सा।

'किं कथयामि, विवशोऽस्मि। अन्तर्व्यूहस्य प्रवेशपत्रमागतम्, तत्रैव गन्तुमिच्छामि। प्रयागस्य कृते अन्तिमः एवासीत् शकटोऽयम्।' सङ्कुचितो भूत्वाऽवोचत् श्रीनिवासः,

'किं लोकसेवाआयोगेन समाहूतास्सन्ति भवन्तः?'

'अथकिम्'

'अहमप्याहूताऽस्मि। तत्रैव गच्छामि। कस्माद् विश्वविद्यालयात् एम० ए० इत्युपाधिं लब्धवन्तो भवन्तः?' ईषद्विहस्य कथितं तया।

'काशीहिन्दूविश्वविद्यालयात्। भवत्या च कुतः?'

'लक्ष्मणपुरविश्वविद्यालयात्।'

'कस्यां श्रेण्याम्?'

'प्रथमश्रेण्यां द्वितीयं स्थानम्। भवता?'

'प्रथमश्रेण्यां प्रथमं स्थानम्।' किञ्चिद्विहस्यावोचत् श्रीनिवासः।

'इदानीं किं कुर्वन्ति भवन्तः?'

'अनुसन्धानं करोमि। पुनर्भवत्यः?'

'अहमपि।'

'वाराणसी नगरस्यैव निवासिनः सन्ति भवन्तः किम्?'

'एवम्',

'सम्भवतः मया वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वती-भवनाख्ये पुस्तकालये श्रीमन्तो विलोकिताः।'

'अहमपि विचारयामि यन्मयापि तत्रैव भवत्या दर्शनानि विहितानि। गृहं तु मम वाराणसीतः अविदूरः एव ग्रामे-विद्यते। गृहे वृद्धां जननीं विहाय नास्ति कोऽपि आत्मीयः। बाल्यादेव छात्रान् पाठयित्वा अहमपठम्। इदानीमपि तमेव कार्यं विधाय स्वकीयं कार्यं सम्पादयामि। पुनर्भवती?'

'उदरपूरणार्थं पितृचरणाः राजकीयवृत्तिं लभन्ते। येन केनापि प्रकारेण भोजनपानस्य व्यवस्था भवति। पितृचरणाः सर्वदा रुग्णाः एव भवन्ति इदं सविशेषम्। माता तु मम बाल्यावस्थायामेव लोकान्तरे गता।' निःश्वस्य प्रत्युवाच नवयुवती।

'अस्मिन् अन्तर्व्यूहे भवत्या निर्धारणं अवश्यमेव भविष्यति। मम विधवा भगिनी आसीत्। गतमासे एव तस्याः निधनमभूत्। इदानीं तस्या• बालकद्वयस्यापि संरक्षणभार• ममोपरि आपतितः।'

'तर्हि अहन्तु भाग्यशालिन्येवास्मि। किन्तु भवन्त सर्वाधिक रूपेण। अन्तर्व्यूहस्य क विश्वासः? अनेके प्रथमश्रेण्यामुत्तीर्णवन्तो महानुभावास्तत्र आगमिष्यन्ति। अहं तु भवतां कृते जगदीशं विश्वनाथ प्रार्थयामि। जाने, पिपासिता सन्ति भवन्तः। जलमस्ति मम पार्श्वे।' उक्त तया स्वाभाविकेन स्वरेण।

आसीद् वस्तुत• श्रीनिवासः पिपासाकुल, गत दिवसादेव किमपि न खादितं तेन। रूप्यकाणां प्रबन्धे एव यावद्दिन व्यस्तोऽभूत्सः। कर्गजपृष्ठे किञ्चिन्मिष्टान्नमेवं जलपात्रे जलञ्च तस्य पुरतउपस्थाप्य स्नेहेन पृष्ट तया—

'इयान् वार्तालापोऽभूत् किन्तु किं नामधेया भवन्त, इति न ज्ञातं मया।'

'जनाः श्रीनिवास इति कथयन्ति माम्। भवत्याः शुभनामधेयम्?'

तदा नवयुवतिश्चरणेषु निहितान् उपानहान् निष्कास्य किञ्चिद्विरम्य नारीजनसुलभलज्जयाऽवोचत—'विमला' इति कथयन्ति माम्।'

मध्ये न कापि महिला तस्मिन् कक्षे समागता, नैव त्रिकटनिरीक्षकः समागत, महिलाकक्षे उपविष्टोऽस्मीति ज्ञानमपि नाभूत् श्रीनिवासस्य। यदा गन्तव्यस्थानमागतं तदा किञ्चिद्विचार्य अवोचत् विमला—

'अत्र कुत्र स्थास्यन्ति भवन्तः?'

'कुत्र स्थास्यामीति न विचारितं मया। अत्र कोऽपि परिचितो नास्ति। यात्रिणां कृते धर्मशाला तु अत्रापि भविष्यत्येव। अत कस्यामपि धर्मशालायां स्थास्यामि।' प्रत्यवादीत्स•।

'मया सह आगम्यताम्। अत्र मम पितुः सम्बन्धि जनाः निवसन्ति। तत्रैव गत्वा निवसावः। सुविस्तृतमस्ति तेषां भवनम्।'

'प्रस्तुतोऽस्म्यहं, किन्तु मम परिचयं कया रीत्या दास्यति भवती?' विहस्यावोचत् स•।

'दास्याम्येव किमपि।' कथित तया।

'नहि, इदानीमेव विचार्यताम्, अन्यथा न समुचितं भविष्यति।'

किञ्चित्सङ्कुचिता भूत्वाऽब्रवीत् सा—'शिक्षका आसन् मम पितृपादा। भवन्तस्तेषां बालशिष्याः सन्तीति परिचयं दास्यामि।'

'युक्तम्, इदमेव देयम्। किमासीत् पितृचरणानां शुभाभिधेयम्? सम्भवतः कदाचिद् आवश्यकता भविष्यति।'

'रमाकान्तमिश्र इत्यस्ति मम पितुरभिधेयम्।' पुनः कुत्रकुत्र ते शिक्षका आसन्, कीदृशः स्वभावः, इति सेषा सर्वं विज्ञाप्य अपृच्छत्—'अवगता भवन्तः? सर्वं स्मरणपथमवतरिष्यति न वा?'

विहसन्नवोचत् श्रीनिवासः—'सुदीर्घं वर्तते पाठः, पुनरपि स्मर्तुं प्रयतिष्ये।'

अन्तर्व्यूहाथिभ्यः जनेभ्यः प्रतीक्षालयमापूरीमासीत्। तत्र परीक्षाधिकारिमहाभागाः अकारादि क्रमेण तानाह्वयन्ति स्म। यदा श्रीनिवासस्याह्वानमभूत्तदा प्रश्नानां समुचितमुत्तरं प्रदत्तं तेन। पश्चात् बहिरागत्य सङ्केतेन विमलामाहूय एकान्ते अन्तर्व्यूहस्य सर्वापि प्रणाली वर्णिता। पुनः पुनः कथितं तेन यत् तत्र गत्वा धैर्यपूर्वकं सर्वं कथनीयं, न कश्चिदपि सम्भ्रमो विधातव्यः भवत्या इति।

यद्यपि सम्भ्रमेण समाकुलितमासीत्तस्याश्चित्तम् किन्तु भूयोऽपि कथितं तया—'नाहं सम्भ्रमं करिष्यामि, धैर्येण सर्वं सम्पादयिष्यामीति।' पुनः किञ्चिद्विचार्य उक्तं तया—'कीदृशोऽभवत् श्रीमतामन्तर्व्यूहः?' 'युक्तमेवाभवत्। अयि, स्वस्था भव। तवानुक्रम आगच्छत्येव।'

अन्तर्व्यूहं परिसमाप्य यदा तौ गृहमागतौ तदा—गृहपतिः स्वागतार्थं बहिरेव सन्नद्ध आसीत्। तत्रत्यं सर्वं—वृत्तं विज्ञाय तेनोक्तम्—'लोकसेवा-आयोगस्य मुख्य—लिपिकः अस्यामेव प्रतोलिकायां निवसति। अतः तेन अद्यैव अन्तर्व्यूहस्य परिणामः विदितो भविष्यति।'

पुनः विमलामुद्दिश्यावोचत्—'भगिनि! गृहस्वामिनी तु इदानीमपि नागता। तत्र विवाहोऽस्ति तस्या भ्रातुः। अवश्यमेव क्षुधा बाधते युवाम्। अत्रकक्षे काष्ठपीठे अल्पभोजनार्थं सामग्री निहिता विद्यते। अल्पभोजनं कृत्वा स्वयमेव कष्टं करणीयं त्वया। भाण्डारकक्षे भोजनस्य सर्वा सामग्री विद्यते। यथारुचि भोजनं पाचयित्वा

करणीयम्। मया तु पूर्वमेव भोजन कृतम्, अतोऽहं स्वकीये कार्यालये गच्छामि। भोजनस्य रन्धनादिक्रियां सम्पादयिष्यसि किम्?'

'कथं न सम्पादयिष्यामि? अत्र तु मद्गृहमेव।' प्रसन्नेन मनसा ऽवोचत् विमला।

'तर्हि आदिश मां, गन्तुकामोऽस्मि।'

लज्जया किञ्चिदधोमुखीभूय उक्तं तया—'गच्छन्तु भवन्तः चिन्तारहितेन मनसा। अहं सर्वं सम्पादयिष्यामि', तद्दिने मध्याह्नस्य भोजनं यथासमयं न जातम्। कक्षे—गत्वा काष्ठपीठे निहितं मिष्टान्नं विलोक्याब्रवीत् श्रीनिवास —'आज्ञा चेत् सर्वं मिष्टान्नमहमेव खादयामि सम्भवत न रोचते भवत्यै मिष्टान्नम्।'

'कथं न रोचते? भवन्तस्तु स्वकीयमेव भागं स्वीकुर्वन्तु, अस्ति आज्ञा। अहं तावत् भाण्डारकक्षे गत्वा विलोकयामि यत् शाकमस्ति न वा? अन्यथा भवन्तं—आपणपर्यन्ते धावयिष्यामि।' इत्युक्त्वा सा कक्षे प्रविष्टा।

पुनस्तत्क्षणमेव परावर्त्य विज्ञापित तया—'अस्ति सर्वा सामग्री। घृतं, शर्करा, गोधूमस्य चूर्णम्, शाकप्रभृतीनि सर्वाणि वस्तूनि सन्ति।' पुनस्तस्य पार्श्वे एव वेत्रासने उपविश्य स्नेहेनावोचत्—'इदानीं भाण्डागारे ममैवाधिपत्यं वर्तते। अतःनि सङ्कोचेन मनसा आदिश मां किं पचामि? पूरिका, ओदनं, मल्लपूप. (मालपुवा) दधिवटकः (दही बड़ा) पक्ववटिका (पकौड़ी) पर्पटः (पापड़) अपूप्यः (कचौड़ी) शष्कुलिः (समोसा) संयावः, (हलुवा) किं वाञ्छन्ति भवन्तः?'

श्रीनिवासः विहस्यावोचत्—'परान्न दुर्लभ लोके शरीरं तु पुनः पुनः।' अत्र तु अद्य स्वकीयमेव साम्राज्यमस्ति। तर्हिविशिष्टमेव भोजन भवेत्। पूरिका, मल्लपूपाः, दधिवटकाः, अपूप्यः शाकञ्च पाचयतु भवती। सुष्ठु नास्ति किम्?'

'सुष्ठु एवास्ति सर्वम्। किन्तु परिधानपरिवर्तनं विधाय पाचनकार्ये सहायता विधेया भविष्यति। येन सम्पूर्णं कार्यं शीघ्रमेव भवेत्। आज्ञा चेत् अवशिष्टं मिष्टान्नं खादितुमिच्छामि।' विहस्यावोचत् विमला।

'आज्ञा विद्यते। किन्तु शीघ्रतापूर्वकं हस्तसञ्चालनं कुरु, अन्यथा न किमप्यवशिष्टं भविष्यति।' उक्तं तेन। तस्य कथनप्रकार-

अभिलक्ष्योच्चैर्हासमकरोत्सा येन अर्धभक्षितं गोलाभयामुनं (गुलाब जामुन) तस्याः शाटिकायामापतितम्।

अन्यस्मिन् दिने गृहपतिना लोकसेवाआयोगस्य मुख्यलिपिक-महोदया अन्तर्व्यूहस्य परिणामज्ञानार्थं सादरमनुरुद्धा । परिस्थितिं विज्ञाय लिपिकमहोदयेनोक्तम्—'अद्य सायं यावद् अवश्यमेव परिणामस्य आधिकारिकीं सूचनां दास्यामीति।' फलतस्तौ परिणाम-स्य प्रतीक्षायां तथा गृहपतेराग्रहेण तत्रैव अवसताम्

तस्मिन्नेव दिने गृहस्वामिनी एव तस्या अष्टादशवर्षीया पुत्री शान्ता च आगता। स्नानादिकं विधाय श्रीनिवास अतिथिकक्षे उपविष्ट आसीत्। किमपि अन्वेषयन्ती विमला समागता। तां विलो-क्याब्रवीत् सः—'चायपानाय आपणं गच्छामि। सम्भवतस्तत्रैव भोजनमपि करिष्यामि। अतः भोजने प्रतीक्षा न विधेया।'

कृत्रिमेण क्रोधेन प्रत्युवाच विमला—'विचित्रा एव सन्ति भवन्तः। भवतां कृते गृहे प्रातराशस्य प्रबन्धो जातः। दुग्धमानेतुं गृहपतिमहोदया आपणं गताः। किञ्चिद्धैर्यं विधेयं भवता।'

'अयि, धैर्यम्! अष्टवादनवेला सञ्जाता, नास्तिधैर्यम्, अधुना क्षुधा बाधते माम्। किमपि देहि क्षुधानिवृत्त्यर्थं। सयावोऽस्ति किम्?'

'वस्तुतः बालकमिवाचरति भवान्। कुत्रवर्तते संयाव? सया-वस्तु रात्रावेव समाप्तो जातः। द्वित्रि सल्याकाः अपूप्य मया निहि-ताः सन्ति, तान्येवानेतुं शक्नोमि।' हास्यमवरुध्याब्रवीत्सा।

'अयि, आनय किमपि शीघ्रम्। जलमस्त्येव।' विमला अपर-कक्षतः शीघ्रमेव तानादाय आगता। किन्तु तावत् गृहपतिस्तत्र कक्षे समागतः। चक्षुसङ्केतेनैव तामतर्जयत् श्रीनिवासः।

तदनन्तरं गृहपतेः पुत्री शान्ता प्रातराशं चायञ्चादाय तत्रागता। एवं मध्याह्नेऽपि सैव भोजनमादाय आगता। सायं समये मुख्य-लिपिकमहोदयास्तत्रागत्य अवोचन्—'भवन्तावेव प्रथमं द्वितीयौ स्त। इदानीं एकस्यैव स्थानस्य पूर्तिर्भविष्यति। यदि प्रथमं अस्वी-कृतं कुर्यात्तर्हि द्वितीयः स्थानं प्राप्स्यतीति।'

'प्रथमः कः'? महदौत्सुक्येन पृष्टं श्रीनिवासेन, 'अस्मिन्! विष-येतु नाहं वक्तुं समर्थः।' अवोचत् सुनिपुणो मुख्यलिपिकः।

पुनर्यदा स्वस्थानस्य कृते गन्तुमुद्यतौ अमृतां तौ तदा पुनः पुनः नमस्कारमकरोत् शान्तिः। गृहपतिरपि धूम्रशकटविश्रामस्थानपर्यन्तमागतः। मार्गे विमलामभिलक्ष्याब्रवीत् श्रीनिवास—'जाने, गृहान् शुभमुहूर्ते एवागतोऽहम्। सर्वत्र इष्टसिद्धिरेव दृष्टिपथमुपयाति। किञ्चित्संकोचेनाब्रवीत् विमला—स्पष्टमभिधीयताम्। कीदृशी इष्टसिद्धिर्दरीदृश्यते भवताम्?'

स्पष्टमेव कथयामि—'अन्तर्व्यूहेऽपि सफलतायाः आशा वर्तते। गृहपतिः शान्त्या सह विवाहस्य प्रस्तावं करोति।' प्रसन्नेन स्वरेणाकथयत्सः।

विमलाया हृदये आघातोऽभूत्। चकिता भूत्वा अपृच्छत्—'शान्त्या सह विवाहस्य प्रस्तावः कृतः तेन?'

'तर्हि किं सन्यासस्य कृते? सुशीला, सुशिक्षिता, गृहकार्येषु दक्षा अस्त्येवशान्ते। कीदृशं अमृतोपमं भोजनं पाचयति सा।'

'मिथ्या। भोजनं तु मया पाचितमासीत्। किमपि न कृतं तया। यावद्दिनं स्वकीयप्रसाधने एव निरताऽभूत्'।

'भवतु, शिक्षिता तु आस्ते। बी० ए० परीक्षां ददाति।'

'मिथ्या वर्तते सर्वम्। इण्टरमीडियेट परीक्षाऽपि नोत्तीर्णा तया।'

'भवतु नाम शिल्पकलायां तु सुनिपुणाऽस्ति। चित्रनिर्मितानि विलोक्य तु......'

'आम्, प्रदर्शनीतः समानीतानि। सर्वं ज्ञातं मया।' विहस्याब्रवीत् श्रीनिवासः—'अयि, सुन्दरी तु अस्त्येव।'

इदानीं मौनमासादितं तया। वस्तुत अनिन्द्या सुन्दरी आसीत् सा।

गृहं गत्वा तया गृहपतिना प्रदत्त पत्रं पितु समक्षे उपस्थापितम्। पत्रं वाचयित्वा, अवोचत् ते—'विमले, त्वया सह मञ्छिप्पः कः अन्तर्व्यूहं गतः नाद्यावधि त्वया तस्य चर्चा कृता।'

'बाल्ययानादेव . जानामि तम्। वार्तालापे भवदीयं नामधेयं श्रुत्वा तेनोक्तं यद् बाल्यकाले भवत्समीपे पठितं तेनेति।' किञ्चिद्विचार्य अवोचत् सा।

'पुत्रि, कुत्र निवसति सः? एकदा तमाहूय भोजनं कारय। प्रयागात् मधुसूदनेन लिखितमस्ति यद् यदि विमला प्रयत्नं कुर्यात् तर्हि शान्तेरुद्वाह- अवश्यमेव भवितुमर्हति। अहं तेन सह वार्तालापं

कर्तुमिच्छामि। भवतु, अहमेव गत्वा आनयिष्यामि तम्। किन्तु रुग्णता बाधते माम् इतस्तत गन्तुम्।'

'अलमायासेन। अहमेव गत्वा विज्ञापयिष्यामि येन स्वत एव आगमिष्यति स ।' क्षीणे स्वरे प्रत्युवाच विमला।

अपरस्मिन् दिने श्रीनिवासस्तत्रागत्य श्रीशर्ममहोदय प्रणाममकरोत्। पुन बद्धाञ्जलिं विधाय अवोचत्—'गुरुवर्या । यदा भवन्तो घरेलीनगरे अध्यापका आसन्, तदाहमास-तत्र अष्टमकक्षायाम्। संस्कृत पाठयन्तिस्म अस्मान् भवन्त । तत्र एकदा रुग्णा अप्यभवन् भवन्त ।'

'युक्त भणति भवान्। सर्वं स्मरणपथमवतरति इदानीम्। यदा ऽह रुग्णोऽभव तदा तत्र एकश्छात्र यावद्दिन परिचर्यां करोतिस्म। मन्ये भवानेव स । इदानीन्तु भवान् नवयुवक सञ्जात ।' स्नेहेना वोचन् श्रीशर्ममहोदया

'अहमेवास्मि श्रीमता पुरातनशिष्य'।' विनयेन अवोचत् स ।

'इदानीं किं करोति भवान् ?'

'अनुसन्धानकार्यं करोमि।'

'अत्रोपविश मम पार्श्वे।' स्नेहगद्गदया गिरा अवोचन् श्रीशर्ममहोदया । सोऽपि आज्ञानुसारेण पार्श्वे एव उपाविशत्। हस्तेनैकेन तस्य स्कन्ध शनै परामृशन्त स्नेहेनावोचन् शर्ममहोदया —'यशस्वी भव। देशस्य, विशेषत अध्यापकसमाजस्य गौरवाभिवर्धनं कुरु। त्वां विलोक्य अद्याह हर्षनिर्भरो जात यत् मच्छिष्य

'। श्रीनिवासस्यापि हृदय गद्गदमभूत्तस्मिन्क्षणे। तदैव गृहादागत्य विमला अवोचत्—'सिद्ध—भोजनम्। गृहमागत्य भोजन क्रियताम्।' ससम्भ्रमेणोत्थाय प्रत्युत्तरमदात् श्रीनिवास —

'अयि भोजन तु भोजन तु मया ' किन्तु नाशृणोत्सा। पुन शान्तेन स्वरेणाकथयत्—'आगम्यतां, जलमस्त्यत्र। हस्तौ प्रक्षाल्य आसनमलङ्क्रियताम्।'

यदा भोजनमकरोत् श्रीनिवासस्तदा ईषद्विहस्य शनैरवोचत् सा—'यदि शान्ता आगत्य भोजनस्य कृते आग्रहमकरिष्यत् तदा सम्भवत भवन्त. ननुनचमकृत्वैव प्रसन्नेन मनसा भोजनमकरिष्यन् मन्ये। किन्तु नाहमस्मि शान्ता। अत एव पर्याप्त ननुनच विधाय भोजनमभूत्।'

'सत्यमेव भणति भवती। तस्या विनिर्मिते भोजने तथा भोजन-विषयके आग्रहे अपूर्वः रसोऽस्ति।'

'स्वादोऽपि अपूर्व आसीत् किम् ?'

'आम्, स्वादोऽपि अपूर्व आसीत्। भवतु, करपट्टिका देहि।'

'न दास्यामि करपट्टिकाम्। कथं स्वादरहिता करपट्टिका-स्वादयन्ति भवन्तः ? शान्तया विनिर्मिता अमृतोपमा करपट्टिका एव स्वादनीया भवता।' उच्चैर्विहस्याब्रवीत् श्रीनिवास—'जानाति भवती, अग्निरूपो भवत्यतिथि। आनय, करपट्टिका देहि, पुनरीदृग-मुपाय विधेहि येन यावज्जीवनं अमृतोपमा करपट्टिका भोक्तुं पारयेयम्।'

करपट्टिका दत्वाऽवोचत् विमला—'तमेव प्रयत्न कर्तुं प्रयतिष्ये, शान्तया सह विवाहकरणार्थमेवाहूता श्रीमन्त। तस्या सम्बन्धे इदानीमेव पूज्या पितृपादा कथयिष्यन्ति भवन्तम्। अहमपि प्रयत्न-करणार्थं प्रेरिता गृहपतिना। अत कथयन्तु भवन्तः के के प्रतिबन्धाः सन्ति विवाहे ?'

'प्रतिबन्धा ? शृणोतु भवती, प्रथमःप्रतिबन्धो ऽस्ति यद् विवाहे दशसहस्रमिता मुद्रा ग्रहीष्यामि। द्वितीयः प्रतिबन्ध टङ्कणयन्त्र ग्रही-ष्यामि। यतो हि स्वकीयप्रबन्धस्य (थीसिस) टङ्कणकार्यं धनाभावेन अवशिष्टमस्ति। एतदतिरिक्तं रेडियो-सोफासेट-प्रभृतीनि वस्तूनि च। पुनः कन्यायाः कृते आभूषणादिकं सर्वं तस्या पिता एव दास्यति।' प्रत्युवाच श्रीनिवासः।

'अन्यत् किमपि ?'

'नान्यत् किमपि। किन्तु मम गुरुपादेभ्य दक्षिणा एवं गुरुकन्या-या कृते वरत्राभूषणादिकं स एव दास्यति। अलं, प्रस्तुतोऽस्म्यह विवाहार्थम्।'

'सत्य कथयन्ति भवन्तः ?'

'परिहासमवगच्छति भवती किम् ? अयि, विवाहन्तु करिष्या-म्येव। कन्याऽपि दृष्टा मया। शान्ता सदृशी सुशीला, सुशिक्षिता, रूपवती कन्या मम सहचरी भविष्यति, तथा कन्यापक्षत धन धान्य-मपि मिलिष्यति। कन्यायाः पितु प्रदत्त धनं प्राप्य किञ्चित् काल यावत् मानवोचित जीवनं यापयिष्यामि। सुदीर्घं जीवनमतीतं किन्तु नाद्यावधि मया भयङ्करे शीतकालेऽपि ऊर्णपरिधानं परिधृतम्।'

न किमप्यवोचत् विमला। निर्निमेषैर्नयनै तस्यैव मुखमण्डलं पश्यन्ती मनोवैज्ञानिकमध्ययनमकरोत्। यदा तस्याः दृष्टिः मिलिता तदा लज्जिताऽभूत्। पुनस्तेन पृष्टम्—'कथयतु भवती, युक्तं भणामि न वा ?'

'कथमयुक्त कथयिष्यन्ति भवन्त ? हृदयेनाहं वाञ्छामि यद् ऐश्वर्यसम्पन्नाः समाजे उच्चप्रतिष्ठिताश्च भवन्तु भवन्त इति। किन्तु शान्ताया स्वभावस्तु विचित्र एवास्ति। यथा धनिकवर्गाणां विलासिजनानाञ्च भवति।'

मध्ये एवावोचत् सः—'नास्ति चिन्ता स्वभावस्य। अहं—सर्वं सम्पादयिष्यामि।'

'गृहे अवोचत् सा किमपि श्रीमता समक्षम् ?' किञ्चिद्विहस्याब्रवीत् विमला।

'नहि, नावोचत् किमपि।'

'स्पष्टतया नोच्चारणं करोति सा। मध्ये-मध्ये किञ्चिद् विश्रम्य (हकलाकर) वदति। 'श' कारस्योच्चारणं नैव भवति तया कथमपि।'

'अयि, परित्यजैनां वार्ताम्। किं भवति उच्चारणेन, गृहे व्याख्यानदानं तु नैव करणीयं भविष्यति। शकारोच्चारणं विनापि कार्यं प्रचलिष्यत्येव। भवतु, गुरुचरणा अपि आदिशन्ति, भवत्या अनुमोदनमपि अस्त्येव। अतः स्वीकरोमि सम्बन्धम्। युक्तमस्ति न वा ?' प्रत्युवाच श्रीनिवासः।

'युक्तमेवास्ति।'

तदा प्रभृति प्रतिदिनं श्रीनिवास श्रीगुरुचरणानां दर्शनव्याजेन तत्रागच्छतिस्म। किञ्चित् कालं यावत् श्रीशर्म महोदयेन सह वार्तां विधाय विमलायाः कक्षे गत्वा तस्या अनुसन्धानस्य कृते लिखितं प्रबन्धं मनोयोगेन पठति स्म। स्वकीयप्रबन्धस्य कृतेऽपि यदा-कदा वार्तां करोति स्म। एकस्मिन् दिने स्वकीयप्रबन्धमानीय विमलां प्रत्यवोचत्। 'पूर्णोऽभवत् प्रबन्ध। इदानीं टङ्कणस्य समस्या समागता। चतुश्शतमितानां रूप्यकाणामावश्यकता विद्यते टङ्कणस्य कृते। यावद् रूप्यकाणां प्रबन्धो न भवति, तावत्प्रबन्धस्य पाण्डुलिपिरपि नोट्टङ्किता भविष्यति, कृपया पठित्वा त्रुटीनां कृते ज्ञापयतु मां भवती। पठिष्यति भवती ?'

प्रसन्नेन स्वरेणाकथयत् विमला—'अवश्यमेव पठिष्यामि। कुटीरपि ज्ञापयिष्यामि। किं दास्यन्ति भवन्तः मह्यम् ?'

'विमले, किं दास्यामि ? किमस्ति मम दरिद्रनारायणस्य पार्श्वे ? केवलं हृदयमस्ति, शरीरमास्ते। स्नेहदानं करिष्यामि यावज्जीवनम्। शारीरिकसेवामपि कर्तुं शक्तोऽस्म्यहम्। एतदतिरिक्तं नास्ति किमपि मम पार्श्वे संसारेऽस्मिन्।' इत्युक्त्वा उत्थाय निर्गतः।

विवाहस्य चर्चा प्राचीना जाता। इदानीं न कोऽपि तस्य विषये चर्चां करोति। एकदा मधुसूदनस्य स्मरणपत्रं पुनरागतम्। अत शर्ममहोदया पत्रोत्तरस्य विषये चिन्तितवाऽभूवन्। बहिर्गच्छन्तं श्रीनिवासमाहूय बहुकालं यावन्नजाने कस्मिन् विषये वार्तालापम-कुर्वन्। तस्मिन् समये नागता तत्र विमला।

रात्रौ शयनात्पूर्वं स्वयमेवाकथयन् शर्ममहोदया यत्—'इदं पत्रं प्रेषयिष्यामि यत्ते स्वयमागत्य तस्य जनन्याः सह वार्तालापं कुर्वन्तु। अस्माकं कार्यं तु पूर्णमेव जातम्। श्रीनिवासस्तु पूर्णतरपर एव दृश्यते।'

तदा दूरादेव सङ्कोचेनावदत् विमला—'पित, अहमवगच्छामि यत् सम्बन्धोऽयं न समीचीनः भविष्यति'

'कथं पुत्रि ! कथं न समीचीनं भविष्यति ?' आश्चर्यमिश्रितेन कौतूहलेनावोचन् श्रीशर्ममहोदयाः। पुनः शनैरवादीत् विमला—श्रीनिवासमहोदयास्तु अतीव सज्जनाः मृदुलहृदयाश्च सन्ति। दारिद्र्ये एव तेषां जन्माभूत्। न कदापि सम्यक्तया भोजनं कृतम् नापि परिधानान्येव परिधृतानि। शान्तायाः पोषणं समृद्धे गृहे अभवत्। अहङ्कारस्तु पैतृकसम्पत्तिप्राप्तोऽस्ति। सदैव तया कौशेयवसनानि चीनाम्बराणि च परिधृतानि सन्ति। गार्हस्थ्यस्य किमपि कार्यं कर्तुं न प्रभवति सा। यतोहि जीवनेऽद्यावधि कदापि कार्यं न कृतं तया। विद्याव्यसनमपि नास्ति। श्रीनिवासमहोदयस्तु विद्वन्मौलिमणिः वर्तते। स्वकीये समये देशस्य विद्वद्वरेषु तेषां प्रमुखगणना भविष्यति।' इति कथयन्त्या यदा मौनमासादितं तया, अकस्मात्तदा शर्ममहोदया अवोचन् 'त्वं किं वाञ्छसि पुत्रि ! शान्तया सह श्रीनिवासस्योद्वाहो न भवेत् ?'

विमलया मौनमासादितम्।

सदा शर्ममहोदया पुनरवोचत्—'पुत्रि ! अहन्तुभाग्यवादी अस्मि। 'विवाह सम्बन्धोऽपि एकप्रकारेण भवितव्यता एवास्ति। शान्तया सह यदि श्रीनिवासस्य जीवन सुखमय न भवेत्तदापि भवितव्यता एव। भवितव्यता वारयितु कः शक्नोति ?'

इदानीमपि प्रत्युत्तरे न किमप्युक्त तया। फलत शर्ममहोदया शीघ्रमेव निद्रामुपागता। किन्तु सा नोपागता निद्राम्। निबिडेऽन्धकारे चक्षुषी उद्घाट्यविचारसागरे निमग्नाऽभूत्। भित्तौ दोलायमानेन सुविशालेन घटिकायन्त्रेण द्वादशवादनवेलाया सूचना घण्टा-निनादेन प्रदत्ता। तस्या बुद्धिरवोचत् 'विमले, शयनं कुरु, अर्द्धरात्रि सञ्जाता।'

'कथं, केन हेतुना अद्य नागच्छति निद्रा ? किमभवत्' अवोचत् बुद्धि।

'अद्य हृदये एका वेदना भवति। श्रीनिवासः शान्तया सह विवाहं करिष्यति, इति विज्ञाय महत्कष्ट भवति।' निःश्वस्य प्रत्युवाच चित्तः।

'तव किं प्रयोजनमस्ति तेन सह ? किं भवति तव सः ? अल्प दिनानां परिचय एवास्ति केवलम्।' उवाच बुद्धिः।

अञ्जलिं विधायाथोचन्मन —'मा एवं वादीः। सः ममैवास्ति, केवलं ममैव। किन्तु इदानीं काऽप्यपरा तं स्वाधिकारे कर्तुमिच्छति, तर्हि कथं कष्टं न भवेत् ?'

निष्पक्षरीत्या प्रत्युवाच बुद्धि'—'तर्हि स्पष्ट कथय, यत् किं तेन सहोद्वाहं कर्तुमिच्छति भवती ? तस्यैव हस्ते स्वकीयसर्वस्वसमर्पण-कामना वर्तते किम् ?'

तत्क्षणमेव प्रत्युत्तरमदान्मनः—'एवमस्ति। संयमपूर्वकं पञ्चविंशतिवर्षाणां सुदीर्घं जीवनमतीतम्। न कदापि मया कापि कामना कृता। निष्ठापूर्वकं पितृचरणानां सेवां विधाय अल्पतर विद्योपार्जनं कृतम्। सुदीर्घेऽस्मिन् जीवने अनेकानेकाः नवयुवका मम दृष्टिपथमुपगताः, किन्तु नाद्यावधि कमपि सुन्दरतमं नवयुवकं विलोक्याभूद्वाञ्छल्यान्वित मम चित्तम्। परमिदानीमकस्मात् श्रीनिवा-सेन मम सर्वमपहृतमिति मन्ये। अत्यन्तानुरक्ताऽस्मि तस्योपरि। अस्माकं परिचयः जन्मजन्मान्तराणामस्ति न, स्वल्पदिनानाम्। न जाने केनाभिशापेन वियुक्तावावाम्। इदानीं पुनः पुन इच्छा

भवति यत् स्वकीयं सर्वस्वं तस्य चरणारविन्दयोः निक्षिप्य, स्वकीयै-रश्रुभिस्तस्य चरणकमलानभिषिञ्च्य कथयामि—'परिचिनोतु भवान् स्वकीयां विमलाम्। प्रियतम! मम जीवनं सार्थकं विधेहि। त्वां विना जीवनस्य सुदीर्घे मार्गे कथं चलिष्यामि? प्रियवर, निष्कलुषां मां वेदनायाः भीषणविभीषिकायां कथं निक्षिपसि? जीवनधन! त्वां विनाहं जीवितं धारयितुं न शक्ता। दयां विधाय शीघ्रमेव ममोद्धारं कुरु।' इति।

किञ्चिद्विशरणा भूत्वा अवोचद् बुद्धिः—'किमिदमाचरितं त्वया विमले? यदि कदाचित् शान्तया सह तस्योद्वाहो भविष्यति तर्हि तव का दशा सम्पत्स्यते?'

चीत्कारमिव विधाय प्रत्युत्तरमदान्मनः—'तर्हि अहं समाप्तं करिष्यामि स्वीयं जीवनं हालाहलपानेन।' शान्तेन स्वरेणाकथयद् बुद्धिः—'विक्षिप्ता मा भूः। हालाहलपानेन जीवनसमाप्तकरणात्मकं कार्यं न सरलम्। तर्हि स्वयं कथं न निवेदयसि पितृचरणेषु स्वकीया-मवस्थाम्? अथवा येन विना ईदृशी व्याकुलता समागता, तमेव भण यज्जीवनसङ्गिनीरूपेण स्वीकरोतु स त्वामिति।'

सलज्जेऽभूताम् तस्या नेत्रे। सुदीर्घं विनिःश्वस्य अब्रवीत् मनः—'स तु जानात्येव सम्यक्तया। स्वयमेव कथं कथमान्यहम्? नारीजनसुलभलज्जायाः शीलस्य च मर्यादामुच्छेत्तुं कथमपि नाहं समर्था।'

आर्द्रमभवत् हंसतूलं (तकिया) तस्याश्रुमौक्तिकैः। चित्त-स्येदृशीमवस्थां विलोक्य बुद्ध्या मौनमासादितम्।

सप्ताह एको जातः, किन्तु श्रीनिवासः पुनर्नागतः। अतएवोद्विग्ना-ऽभूत्सा। किञ्चिद्दिवसानन्तरं कथं कथमपि आत्मानं प्रबोध्य अध्ययने संलग्नाऽभूत् विमला। एतन्मध्ये एव लोकसेवाऽऽयोगकार्यालयात् तस्याः नियुक्तिपत्रमागतम्। प्रसन्नाऽभूत् सा। एकदा पितृचरणेषु सुखदसम्वादस्यास्य सूचनां निवेदयितुमिच्छा जाता, किन्तु न कदापि कृता चर्चा तया स्वनियुक्तिसम्बन्धे। अपरस्मिन् दिने श्रीनिवासस्य गृहे गता, परन्तु नासीत्तत्र सः। तस्याः प्रवेशमवासिना छात्रेणोक्तं यत्—रुग्णास्ति तस्य जननी। अतस्तां द्रष्टुं ग्रामं गतः। खिन्नेन

मनसा अवोचत् सा—'यदा आगमिष्यन्ति ते तदा सूचनीया यद् गुरुवर्या स्मरणं कुर्वन्तीति।'

'अवश्यमेव ससूचयामि भगिनि! न विस्मरिष्यामि।' तेनोक्तम्।

पश्चात् शिथिलं शरीरमादाय गृहमागता विमला। तस्मिन्नेव दिने स्वकीयमस्वीकृतिपत्रं लोकसेवाकार्यालयं प्रति प्रेषितं तया। पुनः सप्ताह एको जातः। नागतः श्रीनिवासः। तस्य निवासगृहं गता विमला, किन्तु नासीत्तत्र सः। दिवसा अतीताः। नागतः श्रीनिवासः, नैव कुशलपत्रं प्रेषितं तेन। विमलाया जीवने शैथिल्यमागतं, विनष्टोऽभूत् तस्याः उत्साहः उल्लासश्च। फलतः पूर्वं तु यावद्दिनं लिखति स्म पुनस्तदा निश्चेष्टाभूत्वा निरभ्रमाकाशं विलोकयति स्म।

तदा प्रभृति प्रयागतः विवाहविषये न किमपि पत्रमागतम्। अतः सन्तोष आसीत्तस्याश्चेतसि। श्रीशर्ममहोदयानां मित्रमहोदयेन अल्मोडानगरे आगमनार्थं निमन्त्रणपत्रं प्रेषितमासीत्। पत्रं वाचयित्वा विमला स्नेहेनावोचत्—'पितः, तत्र गत्वा मम पठनकार्ये बाधा भविष्यति। परिश्रमं विधाय मईमासं यावत् निबन्धलेखनकार्यं अवश्यमेव पूर्णं करिष्यामि। जूनमासे तत्र गमिष्याव।'

अतः परं प्रतिदिनं विचारयतिस्म सा यदद्य अवश्यमेव समागमिष्यति श्रीनिवासः। यतो हि अद्य काकः वदति, अद्य मम बाहुः स्फुरति, रात्रौ मया सुस्वप्नः दृष्टम्। किन्तु नागतः सः। एकदा विविधरङ्गरञ्जितं विवाहस्य निमन्त्रणपत्रमागतम्। तस्मिन् पत्रे सुवर्णवर्णेषु शान्तायाः श्रीनिवासस्य च नामाङ्कनमासीत्। बहुवारं पत्रं पठितं तया। तदैव श्रीशर्ममहोदया अपृच्छन्—'पुत्रि! कस्यास्ति पत्रम्?' पितः! मम सख्या विवाहो भविष्यति। तस्या एव निमन्त्रणपत्रमस्ति।' उक्तं तया। पुनस्तस्मिन्नेव दिने तया अल्मोडागमनार्थं स्वपितृचरणाः प्रेरिताः। ते तु पूर्वमेव सन्नद्धा आसन्। अल्मोडानगरं गत्वा तत्रत्यं सौन्दर्यं नैसर्गिकं माधुर्यञ्चावलोक्य किञ्चित्स्वस्थमभूत्तस्याश्चेतः। तत्र शर्ममहोदयानां मित्रस्य कन्या आसीद् रमा। तया सह मैत्री अभूत् विमलायाः। विधवाऽऽसीत् सा। एकदा ते द्वे अपि भ्रमणार्थमगच्छताम्। किञ्चिद्दूरं गत्वा नन्दादेवीति-प्रसिद्धस्य मन्दिरस्य प्राङ्गणे प्रस्तरनिर्मिते उपविश्य स्वाभाविकेन स्वरेणावदत् रमा—

'भगिनि! विधवा नास्म्यहम्।'

आश्चर्येण तस्या मुखमपश्यत् विमला। किञ्चित्क्षणानन्तर पुनरवोचत् रमा—'किं गोपायामि, विद्यार्थिजीवने एव प्रेमाभून्नव-युवकेनैकेन सह।' पुन. तेनि स्वस्य कियत् कष्ट, दुःख, वेदना, प्रता-रणाचानुभूता, इति सर्वं विज्ञापित तया। मन्त्रमुग्धा इवाशृणोत् विमला।

'किन्तु तेन महोदयेनाहं मध्ये एव परित्यक्ता।' प्रकम्पितेन कण्ठ-स्वरेण कथयित्वा स्वकीयं कथानक समाप्तमकरोत् रमा।

दुःखेनाभिभूतमभूत् विमलाया हृदयम्। किञ्चिद्विचार्य शनैरवोचत् 'दुःखप्रपूरिते कण्टकाकीर्णे ससारेऽस्मिन् सर्वत्र वेदना, सर्वत्र प्रता-रणा, सर्वत्र उपेक्षा विद्यते। न कोऽपि करोति साहाय्यम्। न किमप्य-स्ति सम्बलम्। हार्दिकीं वेदना हृदये एव निगूहनानिरिक्त नास्ति कोऽपि मार्ग। मम कथानक श्रोष्यसि?'

तावत् स्वस्थाऽभूद् रमा। विषण्णेन स्वरेणाकथयत् विमला—'मम मोहन एकदा धूम्रयाने समागत। तत्रैव परिचयोऽभूत्। भगिनि! यद्यपि तस्य कृते न किमपि कष्ट कृत, नैव त्याग बलिदानञ्च विहित मया। न जाने कथमभूत्तस्योपरि ममत्वम्। अनेकश. प्रबाधित मया चित्तम्, किन्तु नैवावगच्छति केनापि प्रकारेण। प्रतिक्षण तस्यैव विषये विचारयामि, तस्यैव ध्यान करोमि इदानीं तस्योद्वाह जात इति श्रुत मया, किन्तु पुनरपि तस्यैव चरणकमलेषु आत्मसमर्पण कर्तुमिच्छति मम मनः। अवगच्छसि किमहं वाञ्छामि? अहं वाञ्छामि यद् दूरादेव तमर्चयामि एव सदैव तस्य हितसम्पादने स्वकीय सर्वस्वमर्पयामीति। यद्यपि सेवायास्त्यागस्य, बलिदानस्य च कृते अनेके उपायाः सन्ति, किन्त्वहं मूकसेवा कर्तुमिच्छामि। कथय भगिनि, पराकाष्ठा वर्तते न किं मम मूर्खतायाः?

'न न, इयमेव नारीजीवनस्य सफलतायाश्चरमावस्था विद्यते। यदि नारी स्वकार्येषु सफला भवति, तर्हि सफल भवति तस्या जीव-नम्। व्यष्टेरुपासना समष्टिरूपेण परिणता भूत्वा अमन्दमानन्द ददाति। ये जना प्रेम्ण निन्दा कुर्वन्ति, ते वस्तुत ईश्वरमेव निन्दन्ति। नाहमुपदिशामि त्वा प्रत्युत स्वानुभूतिं कथयामि। यत्र समर्पण विधाय प्रतिदानस्य न काऽपि वाञ्छा वर्तते, तत्रैव मानवीयमहत्तायाः परि-चय मिलति। तेन निष्ठुरेण प्रियतमेन मा परित्यज्य प्रेम्ण परिहासः कथ कृतः? इत्येव विचिन्त्याहं दुःखिता भवामि।' पुनस्तस्या

नेत्रे सजले अभूताम् । अश्रुपरिमार्जनमकृत्वैव गृहम्प्रति प्रस्थिताऽभूत् सा । तया सह खिन्नमना विमलाऽपि समागता।

अपरस्मिन् दिनेऽपि सायं समये ते तत्रैव समागतवत्यौ, किञ्चित्कालं यावत् इतस्ततः भ्रमणं विधाय नन्दादेव्याः सायङ्कालिकं शृङ्गारञ्चावलोक्य तत्र एव प्राङ्गणे उपविश्य अवोचत स्नेहेन रमा— 'भगिनि ! अनुसन्धानकार्ये न लगति मम चित्तम्। विचारयामि स्वकीयं निरर्थकं भारभूतं सन्तप्तप्रायञ्च जीवन सन्तप्तमानवानां कृते समर्पयिष्ये । अतः एकं औषधालय निर्माय स्वयमेव तेषां सेवां करिष्यामि । गृहे-गृहे, ग्रामे-ग्रामे च गत्वा जनान् मानवजीवनस्य महत्वं ज्ञापयिष्यामि । स्वकीयां सम्पत्तिञ्च वितरिष्यामि दरिद्रजनानां सुखसौविध्यस्य कृते । सम्भवत अनेन कार्येण कदाचिच्छान्ति प्राप्नुयाम् : कार्येऽस्मिन् त्वमपि सहयोगं देहि । अस्य जीवनस्योपादेयता ईदृशेषु कार्येषु विद्यते । त्वं महिलाशिक्षाप्रचारं कुरु । कथय, दास्यसि सहयोगम् ?' स्नेहेन विलोक्यापृच्छत् सा।

'अयि भगिनी, हृदयेनाहं सहयोगं दास्यामि।' प्रसन्ना भूत्वाऽब्रवीत् विमला। किञ्चिद्विचार्य प्रत्युवाच रमा—

'अयि, कदाचित् तव प्रियतमस्त्वां नेतुं समागमिष्यति तर्हि किं करिष्यसि त्वम् ?'

लज्जयाऽवनत शिरः विधाय उवाच विमला— कथमागमिष्यन्ति ते मां नेतुम् ?

एकदा काष्ठपीठे निहितां मंजूषां विलोक्यावोचद् विमला— 'भगिनि, ग्रामोफोनयन्त्रमस्ति किम् ?'

विहस्यावोचत् रमा—'नहि-नहि, मम पितु टङ्कणयन्त्रमस्ति। टङ्कणविधिं जानासि किम् ?'

'आम् , सम्यक्तया जानामि।' इत्युक्त्वा उद्घाटिता तया मञ्जूषा। यन्त्रस्य सम्यक् परीक्षणं विधाय तां प्रत्युवाच—

'अनेनाहं स्वकीय कार्यं कर्तुमिच्छामि। रुष्टास्तु न भविष्यन्ति ते पितृचरणाः ?'

'अयि, कथं रुष्टा भविष्यन्ति ? इच्छानुसारं टङ्कण कुरु।'

तद्दिनादेव 'खट-खट' इति शब्दं कुर्वती टङ्कणमकरोत् विमला। दैनिकजीवनस्य आवश्यकानि कार्याणि कृत्वा सायं यावत् प्रतिदिनं

टङ्कणं करोति स्म। तस्याः व्यस्ततां विलोक्य एकदा कुतूहलेनापृच्छत् रमा—

'यावद्दिनं किमुट्टङ्कयसि ?'

सा विलोक्याब्रवीत् विमला—'प्रबन्ध (थीसिस) मुट्टङ्कयामि।' 'तव प्रबन्ध समाप्त जातं किम् ? त्वया तु प्रथमवर्षमेवाभिहित पूर्वम्।'

शनैरवोचत् विमला—'सैषामेव प्रबन्धमस्ति। अर्थाभावेन नाद्यावधि उट्टङ्कितमभूत।

दीर्घं निःश्वस्य प्रत्युवाच रमा—'न जाने ते महोदयाः—कुत्र स्वपत्न्या शान्तया सह सुखोपभोगं कुर्वन्ति, किन्तु त्वमत्र '

तत्क्षणमेव अञ्जलिं विधाय कातरेण स्वरेण अवोचत् विमला—'भगिनि, मैव वादो इति प्रार्थये।

अपरस्मिन् दिने रमाया पितृचरणा आवश्यककार्यवशात् लक्ष्मणपुरं गताः। तस्मिन्नेव दिने रात्रौ अकस्मात् अस्वस्था अभूवन् श्रीशर्ममहोदया। स्वयमेव द्राक्तरमानीय चिकित्साया समुचिता व्यवस्था कृता तया। अपरस्मिन् दिने, अपराह्नसमये यदा ते निद्रामुपागता तदा सा शनैरुत्थाय स्नातुं गता। मध्ये एव गृहस्य भृत्येनोक्तम्—'स्वामिनि, कोऽपि समागतः। भवतीं द्रष्टुकामोऽस्तीति।' 'मां द्रष्टुकामोऽस्ति ? कुत्र वर्तते ?'

'द्वारभूमौ तिष्ठति।'

को भविष्यति यो मा द्रष्टुमिच्छति अत्र अल्मोड़ा नगरे इति विचार्य गवाक्षादवलोकितं तया। क्षणमात्रं निस्पन्दसभूत्तस्या हृदयम्। पुरत द्वारभूमौ श्रीनिवासः कपाटोद्घाटनप्रतीक्षायां तिष्ठति स्म। गवाक्षादवलोकयन्तीं विमलां विलोक्य विहस्य अभिवादनं कृतं तेन। विमला जवेन रमाया समक्षमागत्यावोचत्—'भगिनि, ते समागता सन्ति।'

'अयि, के समागताः सन्ति- ?'

लज्जिताऽभूत् विमला। तस्याः प्रसन्नेन मुखमण्डलेन तया अन्वमायि, पुन प्रसन्ना भूत्वाऽवोचत्—'किं तव श्रीनिवासमहोदयाः समागता ?'

'आम्' इत्युक्त्वा वेगेन निरगात् विमला।

रमा च श्रीनिवासस्यातिथ्यमकरोत्। तस्य कृते भोजन-पानस्य सुव्यवस्थां विधाय सा विमलायाः कक्षे गता। तदा दृष्टं तया यत् विमला प्रस्तरमूर्तिरिव निश्चला भूत्वा निर्निमेषैर्नयनैः गवाक्षात् सुदूरवर्तिनीं हिमधवलां पर्वतमालां विलोकयति। विमलायाश्चिबुकं गृहीत्वा अवोचत् सा यत्—'सखि, अनेकान् साधुवादान् वितरामि। तव प्रियतमः श्रीनिवासस्तु वस्तुतः कोटिशः मनुष्येष्वेकः। त महानुभावं विलोक्य हृदयेनाहं प्रसन्ना जाता। यं प्रति आकर्षिताऽसि वस्तुतोऽसाधारण एवास्ति सः। इमं देवस्वरूप पुरुषं का नारी विस्मर्तुं शक्नुयात्? श्रीनिवासोऽपि त्वामेव वाञ्छति। तव प्रेम, त्यागश्च सार्थकौ स्तः।'

उत्तरे विमला शब्दमेकमपि नावोचत्। अधोमुखीभूय केवलं मौक्तिकसदृशैरश्रुभि धरामभिषिञ्चति। तस्याः विचित्रां अवस्थां विलोक्य स्नेहेनावोचत् रमा—'सखि, हर्षस्यावसरे किमर्थं रोदिषि? गच्छ, तव निष्ठुर प्रियतमस्त्वया सह वार्तालाप कर्तुमिच्छति।'

किन्तु यदा विमला तत्र गता तदैव भग्नाऽभूत् श्रीशर्ममहोदयानां निद्रा। श्रीनिवासः विमला च तत्रैव गतौ यत्र ते रुग्णशय्यायामासन्। अकस्मात् ज्वरवृद्धिरभूत्तेषाम्। डाक्तरमहोदयस्य सङ्केत विमलायां विहाय शीघ्रमेव गत श्रीनिवासः डाक्तरमानेतुम्। डाक्तरमहोदया आगत्य परीक्षणं कृत्वा सूचिकाप्रवेशेन औषधिसञ्चारं विधायावोचन् यत् सावधानतया परिचर्या विधेया। रुग्णस्यावस्था शोचनीया विद्यते।

श्रीनिवासः स्वयमेव शर्ममहोदयानां परिचर्यामकरोत्, तस्य आगमनेन निश्चिन्ताऽभूत् विमला। द्वि-त्रिदिवसानामनवरतेन परिश्रमेण स्वस्थाऽभूवन् ते। एकदा श्रीनिवासमाहूय स्नेहेनावोचन्—'पुत्र, स्वगृहमेव गन्तुमिच्छामि। अत्र न रोचते साम्प्रतम्। अतः गृहगमनविषये विमलया सह परामर्शं विधाय यथोचितं प्रबन्धं कुरु', इति।

'तत्रभवन्तं नेतुमेव समागतोऽहम्। शीघ्रमेव नेष्यामि।' इति विनम्रतया अवोचत् श्रीनिवासः। तस्मिन्नेव समये दुग्धमादाय विमला तत्र समागता। तां विलोक्यावोचन श्रीशर्ममहोदया 'पुत्रि, अस्मान् नेतुं समागतोऽस्ति श्रीनिवास।'

पितर दुग्ध पाययित्वा अवोचता चन्द्रीनिवासमहोदयस्य कठिनेन परिश्रमेणैव भवन्तः स्वस्थाऽभूवन्। भोजनं, पानं शयनञ्च विहाय अहर्निशं भवता समक्षे उपविष्टाऽऽसन् श्रीनिवासमहाभागाः।

तद्वाक्यं श्रुत्वा हर्षविह्वलेन मनसाऽरोचन् श्रीशर्ममहोदया — 'पुत्रि, श्रीनिवास एव वृद्धस्य मम सरक्षकः सहायकश्च वर्तते। यद्ययं मम कृते न कठिनं श्रमं करिष्यति तर्हि कः करिष्यति ? अयमेव मम तपस्विसुत। पुत्रि ! त्वया एव अस्यान्वेषणं विधाय महाभय दत्तं। अनेनैव कारणेन तव अनुसन्धानात्मिका परीक्षा साफल्येन समाप्ता जाता।'

सायं समये आहूय अवोचन् ते—'परिभ्रमणाय गच्छतम्। किन्तु शीघ्रमेव आगन्तव्यम्। अन्यथा एकाकी अहं खिन्नो भविष्यामि।'

मौनमाश्रय तौ शनैः शनैस्तत्रैवागच्छतां यत्र पूर्वं रमया सह विमला गच्छति स्म। तत्रैव प्राङ्गणे तस्मिन्नेव चत्वरे उपविश्य उपालम्भभरेण स्वरेणाकथयन् श्रीनिवासः 'अत्रागमनस्य सूचनाऽपि न प्रेषिता भवत्या। कियत्कष्टमभूत् माम्, जानासि ? पत्रमेकमपि न प्रेषितम्।'

स्नेहकातरेण स्वरेणावोचत् विमला—'केन सकेतेन प्रेषयामि पत्रम् ? स्वसंकेतमपि दत्तं भवता ? प्रतिदिनं भवता निवासस्थानं गत्वा निराशीभूय प्रतिनिवृत्ताऽभवम्। अहं जीविता मृता वा इति अन्वेषणमपि न कृतं भवता।'

'गृहे अस्वस्थाऽसीज्जननी। यदा स्वस्थाऽभूत् सा तदा प्रतिनिवृत्य तव गृहेऽगच्छम्। किन्तु त्वं तु तव कृते-अनेकवारमितस्ततः परिभ्रमणं कृतम्। वस्तुतः विक्षिप्त इवाभवं तव विरहे।' सस्नेहम-ब्रवीत् श्रीनिवास। व्याकुलीभूय प्रत्युवाच विमला—'तदा कथं ज्ञातो मम सकेत ?'

'तव प्रतिवेशिन्या श्रीमिश्रमहोदयस्य पत्न्या ज्ञातम्। अत्रा-गन्य तस्याः कृते पत्रं दत्तमासीत्त्वया। तया सकेतं विहाय सर्वं विहाय अत्रागच्छं तव कृते।'

'किन्तु भवता सह शान्ता नागता ? कुत्र वर्तते सा ?'

'शान्ता ? का शान्ता ? तव पितु मित्रमहोदयस्य मूका पुत्री ? मया सह कथमागच्छेत् सा ? तया सह मम कः सम्बन्धः ?'

आनतं शिरो विधाय शनैरवदत् विमला—'मैव वादी । इदानीं तु सा जीवनसहचरी जाता। भवतः ईदृश व्यवहारः न शोभन ।'

साश्चर्यं प्रत्युवाच श्रीनिवासः—'अयि किं कथयसि ? शान्ता मम सहचरी जाता ?'

'तर्हि का विद्यते ? यया सह ग्रन्थिबन्धनमभूत्, सप्तपदिका क्रिया सम्पन्ना, तामेव एव कथयन्ति भवन्तः ?' आनत शिरो विधायैव-अवोचत सा।

'मौना भव। एवं विधेन व्यंग्येन मा खेदय माम् । मम दरिद्रस्येदृश-परिहास न करणीयो भवत्या ।'

श्रीनिवासस्य क्लान्त, शुष्क वेदनापूर्णञ्च मुखमण्डल विलोक्य आश्चर्येण प्रत्युवाच विमला—'किमभूद्भवताम् ? ईदृशीं वेदनापूर्णां वार्तां किमुदीरयन्ति भवन्तः ? शान्तया सह भवत उद्वाहो नाभूत किम् ?'

किमुदीरयन्ति भवन्त ? मम पार्श्वे विवाहस्य निमन्त्रणपत्र मुद्रितमासीत् निमन्त्रणपत्रे श्रीमतामभिधेय । किन्तु इदानीं भवन्त' कथयन्ति ।'

'धन्यासि खलु। नमस्करोम्यहम्। अयि, येन सह शान्ताया विवाहोऽभूत् स तु श्रीनिवासशुक्ल विद्यते। अह त्वस्मि श्रीनिवास-मिश्र । इदमपि न स्मरसि किम् ? मन्ये अन्धकारे पठित भवत्या पत्रम् ।'

निर्निमेषनयनाभ्याम् तस्य मुखमण्डलमेवापश्यत् विमला। पुनः किञ्चिदावेशेनावोचत् श्रीनिवास—विमले, मा प्रतिविश्वास न करोषि ? किं त्व मा ईदृश कृतघ्नमवगच्छसि ? ते महोदयाः मम गृहमागत्य विवाहस्य प्रस्तावमकुर्वन् जनन्या समक्षम्। किन्तु तस्य प्रबलै शब्दै. विरोध विधाय मया सर्वं स्पष्टीकरण कृतम् । स्वकीय जीवनसरक्षिका विहाय कथमहमन्या जीवनसहचरीरूपेण स्वीकुर्याम्। मम निश्चयं विज्ञाय जननी अवोचत् यत्—'पुत्र ! ता वधू-रूपेण विलोकयितुमिच्छामि । मन्ये शीघ्रमेव तस्याः दर्शनेन आह्लादयिष्यसि माम् ।'

विमला मूकीभूय तस्य वार्तामशृणोत् । पुन—स्नेहेनावोचत श्रीनिवास—'आगमिष्यसि विमले ! त्वां विलोक्य जननीहृष्टा भवि

प्यति। तव स्नेहेनाहं कृतकृत्यो भविष्यामि। यावज्जीवनं तव स्नेह-प्राप्तये प्रयतिष्यामि। किन्तु कदाचित् यदि मां प्रति रुष्टा भविष्यसि त्वं तदा तु संसारेऽस्मिन् निःसहायो भविष्यामि। वाराणस्यामेव मम नियुक्तिर्जाता। अतः निर्लज्जो भूत्वा प्रार्थयामि यत् स्वगृहे मह्यमपि स्थानं देहि। त्वां विहाय अन्यत्र स्थातुं नास्मि समर्थः। मामपि देवतुल्यानां पितृचरणानां सेवाया अवसरं देहि। विमले! मम प्रार्थनां स्वीकरिष्यसि किम्?

अकस्मात् प्रारोदीत् विमला। रुदन्ती च प्रोवाच—'हृदयेश्वर! कथमीदृशं प्रहारं करोषि मम हृदये? दयां कुरु, कदापि ईदृशं न वक्तव्यं, अन्यथाऽहं ……'

'किञ्चित्कालं यावत् श्रीनिवासः तस्या एव मुखं विलोकयामास। तां विलोक्य स्वयमपि करुणया विह्वलोऽभूत्। पुनः स्वस्थो भूत्वा अवदत्—'सन्ध्या जाता। गृहं गच्छावः' इत्युक्त्वा उत्थाय गन्तुमुद्यतोऽभूत्। •

तस्मिन्नेव समये पृष्ठतः कयाप्युक्तम्—'शृणुभवन्, अहं गन्तुं न पारयामि। मम चरणौ कम्पेते।'

श्रीनिवासः पृष्ठतोऽवलोक्य विमलायाः हस्तं स्वहस्ते आदाय प्रेमपूर्णेन स्वरेणावोचत्—'इदानीं गन्तुं पारयसि?'

'आम्, सम्प्रति गन्तुं पारयामि।' शनैरवोचत् विमला 'सुदीर्घोऽयं मार्गः, चलिष्यसि?'

शनैरवोचत् विमला—'यावज्जीवनं श्रीमता सह चलिष्यामि।'

•

# अपूर्वस्त्यागः

[ पं० रामेश्वरशास्त्रीविद्यालङ्कारः, राजस्थाने लक्ष्मणगढवास्तव्य. ]

आसीन्मध्याह्नवेला। कालो भीष्मस्य ग्रीष्मस्य। ललाटन्तपस्तपनः खरतरकरनिकरैरुद्वमति स्म प्रचण्डाङ्गारान्। ज्वालामुखीपर्वतं स्वोष्मणा न्यक्कुर्वन्तो मरुकान्तारधरणी नितरामतप्यत। सुवर्णमृत्स्नामितस्ततो वेश्मसु प्रचलज्जननयनेषु मुखेषु च विकिरन्ती शुष्कानपि पादपान् लास्यविलासमुपदिशन्ती वात्या कालव्यालीवोष्णं श्वसन्ती निर्गतबाधं प्रवहति स्म। धनिका निरन्तरं व्यजनं चालयन्तः प्रासादगवाक्षलग्नतलदसंभारान् वारिणाप्लावयन्त पुनरपि सोष्णं श्वसन्तो महता कष्टेन कालं तं कालयन्ति। अन्ये च मध्यवित्ताः कूपकाश्च कस्यचित् मच्छायशीतलस्य पिप्पलस्य शमीवृक्षस्य च तले सुखं प्रसुप्ता, केचन तत्रैव किमपि कार्यं कुर्वन्तो यथा कथंचित् निस्पृहतयैव गमयन्ति तं समयम्। पक्षिणां मधुरारावः तस्मिन् समये कोटरनिलीनानाम् तेषां मुखेष्वेव न्यलीयत। किन्तु तस्मिन्नपि नीरवसमये यदा कदाचित् कपोतहुङ्कृतिः मौकलिकुलविरुतिश्च तां निःशब्दतां भेत्तुं निष्फलं पर्यश्राम्यत्।

परन्त्वस्मिन्नपि सर्वप्राणिभयङ्करे काले मलमल्लकमात्रपरिधानः बुभुक्षाजर्जरितकाय कश्चिद्दशवार्षिको बालः स्वदैन्यमविरलं विगलदश्रुजालच्छलेन प्रवाहयितुमिच्छन् रथ्यया जनसंबाधविहीनया निरुत्साहः क्वचित् तिष्ठन्, कुत्रचिद् विश्राम्यन्, कुत्र चेतस्ततो निलयान्तरालेषु सुप्तान् जनान् पश्यन् न केनापि सलपन् गच्छति स्म। बालोऽयं ब्राह्मणकुमार आसीदिति तदंसस्थितयज्ञोपवीतेनानुमीयते स्म। जनास्तं पश्यन्ति, परं नालपति कश्चित्तेन, तस्य दारिद्र्यमनुभवन्ति, परं तद्दूरीकरणाय नोत्सहते कोऽपि, तस्याश्रुधारावर्षणं दर्शकानां तेषां मसृणीकरोति चित्तं परं न तस्यावग्राहकः कश्चित्, तथापि सर्वथानिरुद्धं स.। किन्त्वग्रे प्रचलन् तेन ग्रीष्मपवनाघातेन प्रभाकरप्रचण्डरश्मिना च तथा संतप्तचरणोऽकारि यथा तत्रैवाङ्गारतोऽप्यधिकं तप्यमानेऽवनीतले मूर्च्छितो निपपात। सर्वं

शरीर पूर्वं धूलिसात् पश्चात् वृन्ताकभरित्रवत् सजातम्। अस्येमां दशां कश्चित् षोडशवार्षिको बालो निजनिकेतनगवाक्षतोऽपश्यत्। स्वभावेन दयार्द्रहृदयोऽयमेवमवनौ विलुठन्तमेन बालक विलोक्य दयाकृष्टचेता तत्समीपमगमत्, मूर्छितमेव त निजभृत्यहस्तात् स्वगृहमानयत् सम्यगुपचर्य च त स्वस्थतामनैषीत।

परमात्मकृपया स्वस्थ स पर्यङ्कतले सुकोमलशय्यायां विलुठन्त शीतलोपचारक्रियया पुनरपि जीवनमित्रागत स्वात्मान निजसमुखे यौवनलीलया विलसन्त साक्षात्करुणावतारमिव प्रस्फुरन्त 'करुणाकुमार' नामकमेक तरुण च विलोक्य मनसि प्रहृष्ट तथात्यन्तविविधवस्तुदर्शनतो जातकुतुको मन्दमन्दमवादात्।

बाल –विचित्रमिद गृह पश्यामि, दैन्यतया नेदृश कदाचिन्मया दृष्टपूर्वम्। ( वेदनामनुभूय ) अह तु रथ्यायां तद्दिने पतित आसम्, कियान् कष्टकर स काल आसीत्, केनाह तद्दशात ईदृशीं निरुपमां दशां प्रापित । हृदा तस्मै समर्पयामि श्रद्धाञ्जलिम्।

करुणाकुमार रुग्णस्य वाचमाकर्ण्य तत्पार्श्वे भूत्वा सान्त्वयम् अवादात् गृहीत श्रद्धाञ्जलि । परन्तु अयोग्योऽह समर्पणस्य। अत्र मया स्वकर्तव्यमेवानुष्ठितम्। परन्तु प्रार्थये नाह पुनरेव वक्तव्य, त्वमसि मम कनीयान् भ्राता।' बालको जन्मत एव मातृपितृविहीन आसीत्, सहसैव स्नेहभरिता तद्गिर श्रुत्वा प्रतिवक्तुमुत्सुकोऽपि निरुद्धकण्ठो बाष्पभरेण कारुण्यरसापगां तदुपकारान् विमलयितुमेव प्रावाहयत्। तत्प्रवाहपतित करुणाकुमारो धैर्यपुलिनसाहाय्येन किंचिदवष्टभ्य स्वात्मान 'बाल! त्व योऽसि सोऽसि। अह तु त्वा स्वानुजमेव मन्ये। एतावदेव कष्टम्, यदेतावद्दिनपर्यन्त स्वात्मानमेव व्यस्मार्षम्। अधुना त्वया पूर्वजीवनवृत्तान्त विस्मृत्य मयि ज्येष्ठभ्रातृवत् प्रत्येतव्यम्'।

बाल –(अश्रूणि विमृज्य) असहाय सहायता लब्ध्वा सहायकमेवावलम्बते, तथैवाह त्वामनुसरिष्यामि परन्तु ब्राह्मणकुमारोऽह यथा स्वगौरव रक्षन् जीवन यापयेयम् तथा श्रीमद्भिर्विधेयम्।

करुणाकुमार –तथैव भविष्यति। श्वो दिन एव मत्सम सर्वामवस्थां भवानधिगन्ता इति किं बहूक्तया।

बालो यो नाम्ना गिरीशकुमार इति करुणाकुमारेण सम्बोधितोऽभूत्, स्वस्थो भूत्वा तेनैव सह खेलन्, कूर्दन्, हसन्, विहरन्,

आलपन्, महता सुखेन समयं नयति स्म। पुरातनं सर्वं भुक्तं दुःखौघं व्यस्मरत्। अधुना नवीनैवाकृतिः नूतनैव सर्वा व्यवस्था तस्याभूत्। एकस्यां पाठशालायां पाठयितुं प्रवेशितः स तदीयं सकलमध्ययनं द्वाभ्यामेव वर्षाभ्यां पर्यसमापयत्। ततः स हाईस्कूले, तदनु महाविद्यालये प्रवेशितः स्वकीयया प्रखरया प्रतिभाप्रभया करुणाकुमारेण सहैव बी. ए. परीक्षामुदतरत्। करुणाकुमारस्त्वेनां परीक्षामुत्तीर्य व्यापारकर्मणि संलग्नोऽभूत्, परन्तु जात्या ब्राह्मणतया करुणाकुमारस्य महत्या दययाऽङ्कविद्यामपहाय गिरीशकुमारः संस्कृतविद्यां पठितुं प्रावर्तिष्ट। भगवती सुरभारतीभारतीयैरवश्यमध्येया विशेषतो ब्राह्मणकुमारैः, अस्माकं प्राक्तनं पुरावृत्तं धार्मिकं रहस्यमन्यच्च जगत्यां यत् किंचिदपि वैज्ञानिकं, दार्शनिकं, आयुर्वेदिकं, रहस्यमनुभूयतेऽवलोक्यते तत्सर्वमस्या एव प्रसादभूतमिति पर्यालोच्य स विशेषतोऽस्या अध्ययने प्रेम्णा पर्यलगत्।

तस्याः पठने स एवम्भूतः भावाविष्टोऽभूत् यत्तस्या एकैकवाक्यानामग्रे स्वात्मनोऽपि मूल्यं नाजीगणत्। कालिदासीयकाव्यनाटकेषु मधुरमधुरान् मनोमोहकान् भावान् विभाव्य शेक्सपीयरकृतिषु तस्य मनः श्रद्धामहासीत्। यं यं विषयं तुलनात्मकबुद्ध्या दिदृक्षुरयं निर्जरभारत्यामध्यगीष्ट तस्मिन् तस्मिन् विषयेऽस्यां गवि निरुपमां प्रौढिं सरलसरलतया भावावबोधनचातुरीं च निभाल्य समस्तदेशीयभाषाणामुदयस्थानत्वेन शीर्षण्यामेनामेवामन्यत। महाभारते, रामायणे च शिबिराज्ञो दधीचर्षे रामस्य च त्यागमहिमानं पाठं पाठं नितरामसावतुष्यत्। एतेषामाख्यानानामेवम्भूतोऽपरिहार्यः प्रभावोऽस्य हृत्पटे आसक्तो यो यावज्जीवं तथैव समवर्तिष्ट। कमपि दरिद्रं बालकं विलोक्य स्वकीयां पुरातनीं दशां स्मरन्नसौ रहस्यरोदीत्, यथाशक्ति साहाय्यमकार्षीत्। कस्यचित् बालकस्य समीपे यदि परीक्षा प्रदातुं आवेदनपत्रपूर्तिशुल्कं नाभवत् तर्हि तस्य दशां विलोक्यासौ गुप्तरीत्यैव तस्मै रूप्यकाणि स्वहस्तेनान्यजनैः प्राहिणोत्। कस्मैचित् वस्त्राणि, कस्मैचित् पुस्तकानि, कस्मैचित् रूप्यकाणि गुप्तरीत्यैव प्रेषयन्नयं पठनकाल एव त्यागमाहात्म्यं कार्यरूपेण परिणीतवान्।

एवं च पठतोऽस्य गतः पञ्चविंशतिवर्षात्मकः कालः। समग्राशास्त्रेष्वगाधपाण्डित्यमभजत्। अन्यास्वपि कक्षासु प्रदर्शितं पारगामित्वमनेन। विवाहं योग्यामयस्यामभिरूपेण करुणाकुमारेणाति

सम्प्रार्थितोऽपि ब्रह्मचर्येणैव समस्तजीवनं निनीषु परिणयं नाकार्षीत्। यस्याभिलाषो दीनबालकानामुद्धरणायासीत् सङ्कल्पितं तेनपां सेवैव मे जीवनलक्ष्यम्। प्राणिवर्गेषु दयैव मे सहचरी, त्याग एवान्तिम पुरुषार्थः। तस्मात् स तेषां सेवाकरणायैक 'सेवानिकेतन' मित्यभिधानं विद्यालयं करुणाकुमारचन्द्रस्य साहाय्येन समुद्घाटयत्। दीना बालका तत्र शिक्षामलभन्त, गिरीशा रात्रिन्दिवं तत्रैवासीनः सर्वाङ्गीणशिक्षणेनैतान् तथाऽशिक्षयत् यथा ते शीघ्रमेव सर्वे विद्यापरायणा सेवानतरसिका समभवन्।

सर्वेषु छात्रेषु सहोदरभ्रातृभावो जागर्ति स्म, अनवद्य प्रेमैकधारारूपेण सर्वेषां हृदयेषु प्रवहति स्म। शुद्धसात्त्विकजीवनं तेषां विलोक्य को न जनो हर्षमविन्दत्। बाह्याडम्बरस्य सर्वथा "सेवानिकेतने' परिहार आसीत्—सर्वे दयाभिलाषिणः सेवैकरसिका. गुरुभक्तिपरायणाः वसुधैव कुटुम्बकम्मन्यमानाश्छात्रा सेवानिकेतनमलञ्चक्रु। पत्तने पत्तने, ग्रामे ग्रामे, रथ्यायां रथ्यायां, गृहे गृहे, भ्रामम् भ्रामम् सगिरीशाश्छात्रा दीनसेवामकुर्वन्। रुग्णे भेषजवितरणं निर्वस्त्रेषु वस्त्रदानं निर्भोजनेषु भोजनदानं व्यधुः। किं बहुना, करुणाकुमारग्रामस्य 'धर्मपुर' इत्यभिधस्य तत्समीपवर्त्तिनामन्येषां च ग्रामाणां गिरीश एवामुकुट सम्राट्, करुणाकुमार एवाकुबेरोऽपि धनद सेवानिकेतनमेवाप्रतिरुद्धमदुर्गमं दुर्गं छात्रा एव संरक्षका आसन्। पुरि पुरि क्रिमधिरम्—सर्वस्मिन् भूतले गिरीशस्याप्रेषिताऽपि कीर्तितिरव्याहत प्रासरत्। किन्तु न यशोऽभिलाषी, अपितु कर्तव्यकाम्यसौ स्वप्रशसातः स्वकर्णौ सर्वदैव व्यधित।

एवं च कुर्वतोऽस्य गतो बहुतिथः समयः। दैवदुर्विपाकात् करुणाकुमारो राजशोषरोगेण पीडितोऽभवत्। बहुभिर्वैद्यैर्डाक्टरैश्चासौ सुनिपुणं चिकित्सितः, परन्तु दिने दिने बहुलपक्षरजनीरवत् ह्रासमानमेवाभजत्। पुत्रप्रेमी तत्पिता लक्ष्मीचन्द्रः तस्य रोगापनोदनाय धनं जलमिव प्रावाहयत् परन्तु शुष्कतामियत् तस्य रुधिरं मनागपि शैथिल्यं न भेजे। गिरीशचन्द्रोऽपि रात्रिन्दिवं तं परिचचार छात्रा अपि प्राणपणेन तस्य परिचर्यां चक्रुः, परन्तु न कयापि विधया तस्य रोगक्रमस्तनिमानमाप्नवान्, अन्ते सर्वैर्निश्चित्य सर्वेषां वैद्यवराणां डाक्टराणां चैका समितिः सङ्घटिता, या निश्चयं कृत्वा रुग्णस्य जीवनोपायं वदेत्। सा रुग्णस्य सर्वां क्रियामवस्थां च पर्यालोच्यावदत्

अस्य शरीरे रक्तस्य ह्रासो भवति । साम्प्रतमस्य शरीरे रुधिरं नास्ति, रुधिरादृते मनुष्यजीवनं सुरक्षितं न भवति । 'Blood is the Life' तस्मादस्य जीवनमन्यस्य कस्यचिन्मनुष्यस्य रक्तप्रवेशेनैव सम्भाव्यते, अन्यथा जीवनाशा दुराशैव । चिकित्सकपरिषद् एतन्निर्णयं निशम्य सर्वे चित्रलिखिता इवोत्कीलिता इव समास्थिषत । .

पिता मातुर्माता पितुर्मुखं मिथो व्यलुलोकत्, गिरीशपत्नी तु मह्यं कोऽपि रक्तप्रदानाय न कथयेदिति भियाऽवगुण्ठितमपि स्वाननं पुनरपि निपुणमवगुण्ठयामास ।

अवस्थामिमां दृष्ट्वा चिकित्सका प्रोचुः एकहोरात्मकः कालोऽवशिष्टोऽस्य जीवनस्य यद्यपि कोऽपि स्वरक्तं निजप्राणमोहं त्यक्त्वा दद्यात् तर्ह्ययं जीवितुं शक्नोति । पुनरपि सैव निस्तब्धता व्यराजत । नीरवतां भिन्दन् सान्द्रजलदधीरगम्भीरध्वनिरुदतिष्ठत् । सहसोपेत्य गिरीशचन्द्रोऽवदत् महाभागा ! मत्प्राणरक्षकस्यास्य कृतेऽहं स्वकीयं रुधिरं प्रदातुं कामये, यावदभिप्रेतं भवेत् तावदविगणय्य मत्कलेवराद्भवन्तो ग्रहीतुं प्रभविष्णवः । अहं मुहुर्मुहुर्विचार्यैतत्कर्म कर्तुं सन्नद्धोऽस्मि । शङ्कां नात्र मनागपि कुरुत । यद्यपि तत्र स्थिताः सर्वे तज्जीवनं राष्ट्रजीवनं मन्यमानास्तस्माद्दुःशकात्कार्यात् तं निवारयितुं प्रायतन्त, परन्तु स स्वकीयात् भाषणात् सूचिकाग्रद्वयसमपि पश्चात्पदो नाभवत् ।

अतो दृढं तस्य निश्चयं विदित्वागदङ्काराः भृशं तस्य विनाशात् परितप्यमाना अपि तन्निश्चयं निवर्तयितुमशक्ताः शस्त्रक्रियया वक्षोजं क्षतजं तस्य निष्काश्य निष्काश्य करुणाकुमारहृदि प्रवेशयाचक्रुः । रुधिरप्रवेशेन प्राप्तचेतनः करुणाकुमारो गिरीशस्यैव रक्तं मयि प्रवेश्यत इति विज्ञाय मन्दं मन्दं अ—पू—र्वः—त्या—ग —इति व्याहार्षीत् । तदनु सर्वे तत्रत्या जनाः स्त्रियो बालकाश्च तद्गृहभित्तयोऽपि तमेव शब्दं अन्वकार्षुः । पवनेनापि तच्छब्दं गृहीत्वा सर्वतो दिक्षु तस्यापूर्वत्यागस्य महात्म्यं विस्तारितम् ।

●

# भद्रा कुण्डलकेशा

( श्री जगन्नाथपाठक साहित्याचार्य एम. ए., वाराणसी )

"भद्रे ! तव कुण्डलावर्तकेशपाशसदृशीयं रजनी साम्प्रतं कीदृक् प्रशान्त नीरवेवोपलक्ष्यते। त्वयाऽद्य प्राप्तं प्राप्तव्यम्। शिखरे हि गृध्रकूटस्य कृतानुग्रहाऽसि दर्शनदानेनात्मनो भगवता सम्यक् सम्बुद्धेन"। परा सार्थकतामानीतं महाकारुणिकं शरणमुपागतायास्ते जीवनम्। सन्ततभाववर्तभावमुपनीयमानेऽस्मिंस्त्वत्केशपाशे यथा-गतस्य महाकरुणा रजतसूत्रमिवाबद्धा। अद्य स्रोतोविभूत्या त्वं महाकरुणोत्सवलाभेनात्मानं पुनासि। तुभ्यमद्य ते विगतं व्यर्थं निष्क्रियमुपेक्षणीयं च संवृत्तम्। तथापि त्वद्विगतस्यैवाहमेका छिन्न-विच्छिन्ना छायाऽस्मि अज्ञाताननुभूतरूपेण त्वयि सुचिरात् संलग्ना। न च केवलं संलग्ना, किन्तु सुतरामेकीभूता। परं न त्वं मामधि-गतवती। किं त्वं स्मरसि तस्य वृत्तान्तस्य यदा राजगृहे श्रेष्ठिकुले भद्रेति नाम्ना जातसम्भवा त्वं वय प्राप्ता सती पुरोहितपुत्राय सत्थु-कायात्मानं दर्शनमात्रेणवार्पितवती ? अथ च सोऽपि चौर्यापराधनि-गृहीतस्त्वत्पित्रा द्रव्यराशि व्ययेन सम्मोचितस्त्वत्पतिः संजातः। हन्त, तथापि सत्थुकस्तुभ्यमर्पितचित्तो नाभवत्। त्वदपेक्षया रत्न-जटितेषु त्वदाभरणेष्वेव सक्त समजनि। परिणामे तु त्वया पर्वत-शिखरान्निपातितश्छिन्नविच्छिन्नो भूत्वा गतो विनाशम्। परं त्वया तद्वधेन निजस्य रागस्यापि कृतो वध ? न हि। रागो हि आकर्षणम्, तच्च संसारस्य प्रवर्तने निमित्तम्। सर्वो हि जनस्तदीयवशवर्ती। यथाकामं संचालयति रागो जनम्। अहं हि तस्यैव ते विगतस्यैका छिन्नविच्छिन्ना छाया, यामद्य विनाशं नेतुमुद्यता त्वम्। जाने यत्त्वया भगवतः प्रसादोऽधिगतः, शीघ्रमेव च प्रव्रज्या रागभेदिनी त्वत्करगता भवित्री, सर्वतश्च त्वमन्वर्थजीवना निर्वाणाधिकारिणी भविष्यसीति। तथापि नीरवेऽस्मिन्नेकान्ते त्वामहमेकया स्मृत्या छिन्नविच्छिन्नया एकया चेतनालहर्याऽऽन्दोलयितुमिच्छामि। अथापि यत्त्वया विस्मृतं तदेव स्मारयितु यच्च त्वया लब्ध तद् विस्मारयितु-मिच्छामि।

"पुरोहितपुत्रं सत्थुकं प्रति तवानुराग सर्वथा बाह्य आसीत्। प्राप्त यौवनात् देहपिण्डात् त्वया केवला दुरन्ता तृप्तिरभिलषिता। स हि युवा सुन्दरश्चासीत्। तस्यापि भ्रमरपङ्क्ति स्निग्धे केशपाशे सहस्रशः कुण्डलावर्ता आसन्। हन्त, त्वया केवलमिदमेव बाह्यं रूपमवलोकितं तस्य, दृष्ट्वा चासक्तिपरवशा जाता। किं त्वया क्षणमपि विचारितं यत् सोऽपि अनुरक्तो वा स्निग्धो वा गौरवशीलो वेति! तस्मै समर्प्य आत्मनः स्नेहसम्भार त्वया क्रीतोऽसौ द्रव्यराशिव्ययेन मोचयित्वा च करुणयाऽप्यनुगृहीतोऽसौ त्वया। तेन ते कृतज्ञेन भाव्यम् किन्तु स निष्ठुरः स्वभावपरवशो नैव त्वत्कृतामुपकृतिं चिन्तितवान्। अन्ततश्च निजया विलक्षणया बुद्ध्या तस्य मनोभावस्त्वया समवगत। तदनन्तरमेव निपातितस्त्वया सत्थुक पुरोहितपुत्रो गिरिशिखरात्। अथ त्वमधिकारिणी भगवतः सम्यक् सम्बुद्धस्य महाकरुणायाः संजाता। नाहं विमृशामि यन्नासि पात्रं त्वमिति। पर नाह मूलतश्छिन्ना, स्वेनांशरूपेणाद्यापि त्वयि वर्तेऽहम्। प्राप्तेऽपि महाकरुणाप्रसादे त्वामपि त्वद्विगतस्य स्मारणेन विकलां करिष्यामि। मुक्तजीवनेऽपि तव तादृशः क्षण एकोऽप्यवश्यमुपस्थास्यति यस्मिन् त्व कुण्डलिते निजे केशपाशेऽवश्यमेव सत्थुकस्य पुरोहितपुत्रस्याङ्गुलीनां सस्पर्शमनुभवितासि।

"किं त्व वारमेकमपि कृतवती जिज्ञासां यत् कथमेव सत्थुकस्त्वद् रत्नाभरणेषूद्गताभिलाष आसीदिति? कथं च त्वद्रूपलावण्यमुपेक्षासहगतेन चित्तेनानुभूतवानिति? हन्त, सर्वमेतच्चिन्तितुं क्षण एव नासीत् त्वदन्तिके। त्वं तु निजस्योपकारस्य निष्कृतौ तदीय सर्वस्वमेवापहर्तुं प्रवृत्ताऽऽसीः। कथमसौ नाभवत्,भ्यमर्पणाय स्वात्मनः प्रवृत्त इति न त्वमन्ततो विदितवती। स्वलिप्सायामेव व्याकुलया त्वयाऽवसरो नैव लब्धः! न त्वं वेत्सि यत् कियती कठिनतरा त्वं बाधाऽऽसी सत्थुकस्याभीष्टमार्गोपपतितेति। किन्तु यद् भवितव्यं तदेव सवृत्तम्। बाधाऽन्ततोऽपि बाधैव। त्वया हि सत्थुक प्रापित पर्यवसानम्। सन्नपि चौर्यापराद्धः सत्थुकश्चौरो नासीत्। स हि चौरो भवति यः स्वार्थाय स्वसुखाय स्वतृप्तये च परस्वमपहरति। अपहरणमवश्यमेवैकोऽपराध-, परन्त्वेतद् यदा परेषां हिताय सुखाय शान्तये च क्रियते तदा नापराधः। सामाजिका हि नियमाः कठोराः।

ग्रामेषु ग्रामटिकासु वारं वारं गच्छता सत्थुकेन जना अन्नाभावसङ्कटेन रोगैश्च विविधैरुत्पीडिता दृष्टाः। न च राजशासनं तेषां किञ्चिदपि साहाय्यमाचरति। परं जनैः कृतस्य श्रमस्य बहुलांश एव बलप्रयोगेण राजकीयैः पुरुषैराच्छिद्यते, कोशेषु च निक्षिप्यते। त एव प्रसन्ना स्वस्था सन्ति ये प्रियवक्तृतया वा राजनीति कुशलतया वा कथञ्चित् शासनस्य परिचयमवाप्ता सन्ति। सत्थुकोऽपि राजपुरोहितस्य प्रियवदस्यैवासीत् पितुस्तनयः, परं स्वयं प्रियवदो नाभवत् सः। प्रथमं स्वपितुरर्जितमेव धनं तेन क्षुत्पीडिताया जनताया प्रापितम्। समाप्ते च तस्मिन् सम्पत्तिशालिना वणिजां राजकीयाना च पुरुषाणा गृहे चौर्यमारब्ध तेन। सहायकानामपर्याप्ततायामपि अशैथिल्येन निजकर्मणि प्रवृत्तो विपन्नानां साहाय्यमाचरतिस्म। सम्पन्नाना लुण्ठनमेकत्रापराधः, विपन्नाना च संरक्षणमन्यत्र पुण्यम्। धृतोऽहि स मृत्युदण्डायमाज्ञप्तः। मृत्युर्हि नासीत् काचिद् विभीषिका तदन्तिकम्। मृत्युदण्डमधिगत्यापि प्रसन्नेन सत्थुकेन भणितं यत् शासने वैषम्यं परां वृद्धिमानीतम्, न च राजा विपन्नेषु ध्यानशीलः। मृतेऽपि सत्थुके कदाचित् सहस्रशः सत्थुका समुत्पद्य शासनस्य नियमान् भङ्क्त्वा जनताया समग्रायाः सम्पत्तेः सविभागं करिष्यन्ति, सर्वत्र च साम्यं सम्प्रवर्तयिष्यन्ति। परं न च कश्चित् सत्थुकस्य श्रोताऽभूत् समर्थः। अस्मिन्नन्तरे कोषाध्यक्षस्य प्रियवदस्य स्वपितुः साहाय्येन सत्थुकस्त्वया मोचितो मृत्युदण्डात्। किन्तु किमेष तस्मिंस्त्वदुपकारः ?

"यदा तत्राप्यङ्गकाभरणानि तेष्वेव विपद्ग्रस्तेषु नीत्वा सत्थुकस्त्वत्तोऽपि मुक्तिकामोऽभवत् तदा 'अकृतज्ञ' इति त्वया पर्वतशिखरान्निपातितः, नास्त्यद्य सत्थुकः, परं तदीयं कार्यमद्याप्यवशिष्यते। भगवता महाकारुणिकेन विपद्ग्रस्ता जनता दृष्टा, महाकारुण्येन निजेनानुगृहीता च। परं महाकरुणा तान् बुभुक्षाया राजपुरुषाणामत्याचारेभ्यश्च नैव रक्षितुं समर्था। कथञ्चिदवश्यमेव कठोरहृदया अधिकारिणो महाकारुणिकस्योपदेशेन किञ्चिदार्द्रा समभवन्, किन्तु वैषम्यमद्यापि अवतिष्ठते। त्वयाऽपि विचरणशीलया क्षुत्पीडिता जनता दृष्टा। किन्तु न त्वया स्वसुखनिरभिलाषया परदुःखकातरया च ज्ञातम्। लूनकेशी एकशाटी, पङ्कधरी त्वमुषितवती। एतत् सर्वमपि ते

स्वार्थविलसितम्। तथापि त्वं महाकारुणिकस्य प्रसादपात्रमेव जाता। इदं ते सुमहत् सौभाग्यम्। परमिदं ते सौभाग्यं तादृशः फलित आम्रवृक्षः, यस्य फलानि पूतीभूतानि, यश्च सहस्रशः कीटाणुभिरामूलचूडं ग्रस्तः। किं क्षुधा परिगतानां सहस्रशो जनानां संरक्षणार्थं त्वन्मनसि कदाचित् सङ्कल्पः अग्निकण इव प्रज्वलितो भवितुमर्हति ? किं सत्थुकाय त्वमेतावदपि कर्तुमर्हसि ?

"हन्त भद्रे, न त्वया सुष्ठु चिन्तितम् यत् त्वमनृणा सती राष्ट्रस्यान्नं अद्यावधि भक्षितवती। राष्ट्रान्नभोगस्याधिकारी तु सत्थुक आसीत्। परं जीवनाधिकारोऽपि नाधिगतस्तेन। सत्थुकस्योद्देश्यं महाकारुणिकस्योद्देश्यमनुसरदिव प्रतीयते। परं महाकारुणिकस्य मार्गः सत्थुकस्येवोच्चावचो नास्ति। अत्र राजानो दरिद्राश्च समानाः। तस्य हि जीवनं सार्थकम्, हन्त परं प्राप्तमहाकारुणिकप्रसादाऽपि त्वमिदानीं व्यर्था।"

साम्प्रतमस्यां शान्तनीरवायां रजन्यां मम कुण्डलावर्तेऽस्मिन् केशपाशे कमपि व्याकुलं स्पर्शमिवानुभूतवत्यहम्। काऽपि चेतना मम पार्श्वतोऽस्फुटं स्वरैर्झङ्कृतिमवाप्ता। विगतं मे सम्पूर्णतया छिन्नं च विच्छिन्नं च। नाहमतिरिक्ता मदपरा। अवसरं च प्राप्तवती तथागतस्य भगवतो महाकरुणाया स्निग्धच्छायायां जीवितुम्। ग्लायत्येव मदीया कथा। पुनर्मम कुण्डलिते केशपाशे कथमिव कम्पनमनुभूयते, अत्र कस्यचिद् रक्तार्द्रां अङ्गुलय स्पर्शमिवाकुर्वन्। कस्यचिदननुभूतेव छायालहरी मत्पार्श्वतो भ्रमिमिव कृतवती। अनुभवामि यत् कस्यचित् करो मां गिरिशिखरादिव निपातयतीति। पताम्यहम् पताम्यहम्। आ, अहं पृथिव्यां चूर्णेव विचूर्णेव तिष्ठामि। ममाङ्गानि भुवि सहस्रशः खण्डेषु विकीर्णानि। मम रुधिरेण भूमिरार्द्रा समजनि। किमिदं···· कश्चिदुपागतो महान् भिक्षुः। ममाङ्गानि तेन कारुण्यस्निग्धया दृष्ट्या दृष्टानि, करेणच स्पृष्टे ममाक्षिणी उन्मीलने। अहं स्वस्था ! महाकारुणिकस्य निपतिता चरणयोरहम्। पुनश्च मम कुण्डलावर्ते केशपाशे महाकारुणिकेन स्पृष्टा। बाष्पपरिगते मल्लोचने ! कण्ठरुद्धायन्ते। हे भदन्त ! भवत इयं दासी आम्रा साम्प्रतं कयाचित् प्रज्ञया छाया चेतनया-मग्ना ! असहायाऽचला चेयम्। कस्मिंश्चिद् दुर्ललिते क्षणेऽ-

मात्र परिणामयाऽनयाऽपराध एकः कृतः । इयं हि छाया चेतना तस्यैव छिन्नविच्छिन्ना स्मृतिरिवाद्य पुनरुद्बुद्धा । इयं भद्रा कुण्डलकेशा तव चरणयोः सम्पूर्णतयाऽर्पिता । भवतो महाकारुण्यैवास्याश्छाया-चेतनाया प्रमादं विमुक्तामेनां कर्तुमर्हति । हे महाकारुणिक······हे शास्त······हे सर्वद······।

# "प्रणयति निखिलः संसारः"

श्री जनार्दनस्वरूप शास्त्री, एम० ए०

[ काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयप्राध्यापक ]

नवदल विराजित तुहिनबिन्दुम् सदा सानुराग पश्यति स । दृशा पिबतीव बालभास्करबिम्बम् प्रहर्षति च सुक्लकलनादपूरिते निर्झरे क्रीडतो हेममयूरान् दृष्ट्वा, विकर्षति तस्यनयने स्वर्णप्रभाभासितम् सांध्यगगनम् ।

कुसुमे मधुकराणाम् मधुरा क्रीडा, चंचलायाः तितल्या मौनं निमन्त्रणम्, विहगानां कलनादः, कुङ्कुमायितोषा, नक्षत्राणां समाज, विविधपुष्पाणामामोद, कल्लोलिनीनाम् तरंगावलिः वनस्पति तृणगुल्मादीनाम् मनोहारि हरीतिमादय एव तस्य अध्ययनविषया ।

"प्रकृतिपूजापरः स' इति त जना कथयन्ति ।

वसन्तर्तुप्रभातप्रभेव तस्य मुखम्, मदालसे लोचने, शान्ता गभीराकृतिः, लघ्वीश्मश्रु, रम्यो गौरश्च कलेवर आसीत् । युवैव सः ।

उन्मादिनं तं मन्यन्ते जना । कथयन्ति च यत् 'स सरित्तटे समुपविष्ट सन् गणयति तस्यास्तरङ्गान्' । मौनी मुग्धश्चैव दृश्यते सदा कीदृशोऽयं जन इति विचारयति लोक ।

निराशावशस्तस्य पिता चिंतयति 'अहो मम एक एव पुत्र, अतुला च संपत्ति, कथम् कदा च संभालयिष्यति सुतस्ताम्' इति ।

( २ )

—अस्य चारित्र निभाल्य निराशामाप्तोऽस्मि सखे !

—मयाऽपि भृश चिन्तितम्, किं करवाणि, एतदर्थं बहुधा विचारणेनापि न दृश्यते कोऽप्युपाय ।

इत्थं विमृशति नितराम् वयस्येन सह चन्द्रमणि' । चिन्तयन्तौ एव मौनिनौ संजायेते तावुभावपि । एकदा तु निरन्तरविचारपरस्य मिश्रस्य मुखम् आभया अदीप्यत्, प्राधावच्च मनोरमास्मितरेखा ।

च्छाया धवलद्युतिमवलोक्य यथा पुष्पदलशायी तुहिनबिन्दुर्मोदते, तथा स वयस्योऽपि नितराममोदत। अवदच्चेत्थम्।

'प्राप्तम् वयस्य!'

किमिति? साश्चर्येण चन्द्रमणिना पृष्टः सत्वरम् स।

अहम् निश्चयेन कुमारस्य जीवनं परिवर्तयितु प्रभवामि।

सुधाकरस्य पुरतो नाशमाप मेघघटा। चन्द्रिका सर्वत्र सलील धावति। निराशातिमिरनाशे आशाऽऽलोकभासितमुखः पुनरुवाच—

कथम्?

विवाहेन।

किं विवाहेन?? इतिप्रश्नमयैर्नयनैस्त पिबन्नुवाच 'सत्यं विवाहेन???'

अथकिम्। अस्य जीवने विवाहः क्रान्तिकरो भविष्यति, इति मे निश्चयः। आकुला मे मतिर्न किमप्यवगच्छति।

भार्यां विलोक्य मुह्यन्ति जनाः। का कथा अस्य कुमारस्य।

अहो! युक्तम्। इति वदन् चन्द्रमणिः कृतज्ञतापूर्णं शार्दूलं भृशं स्तौति।

( ३ )

समपद्यत कुमारस्य विवाहः।

अथ नक्तं प्रथमम् मधुर च मेलन भावि द्वयाः।

एतदेव मधुरमेलनम्, यत्र जीवनस्य गीतिका समारोहति। यत्र जीवननाट्यस्य सूत्रपातो भवति, यत्र आशाः साम्राज्यमिव लभन्ते, यत्र द्वौ प्राणिनो एकीभवतः, यत्र च अभिनवे जगति पदार्पणम् क्रियते।

अतिपुण्यम् भ्रमन्ती भ्रमरावलीव चक्षुः, कुन्दकलिका इव दन्त पंक्तिः, कमलमिव नयने। अत्यक्लेशवती किंचिदाक्रान्तयौवना च सास्ति मुग्धा। द्वावेव परस्परं पश्यतः। असंजातालापौ एव किंचित् कालं विमर्शयतः तथापि। सहसा उन्मादेव प्रश्नयन्नुवाच स कुमारः।

'किं तत्र भवती मम प्रेमास्पदम्।'

किंचिदित्यमेव'

'कथावयोर्धर्मः?'

'अहम् तत्रभवन्तम् प्रसादयामि परिचरामि, श्रीमान् च मां रक्षतु प्रणयतु च इत्येव आवयोर्धर्मः।'

'किन्तु ...'

'किन्तु—इति किम्'

जानीषे एव यदहं प्रकृतिपूजक, अहम् प्राकृतानि, दृश्यानि, प्रणयामि। कीदृशी मनोरमा सुधांशोश्चन्द्रिका। रसालस्य नवानि दलानि, कोकिलस्य कूजनम्, तरुच्छायासु खद्योतस्य भग्नप्रकाशः, अहो अलौकिकमिदम् जगत्,'

'प्रमाद्यति तत्र भवान्।'

'अहम् ?'

'आम्।'

'कथम् ?'

'यद् दृश्यते तत्सर्वं प्रकृतमेव।'

'सत्यमेव।'

'भवन्तः प्राकृतान् प्राणिन प्रणयन्ति। मयूरे, कपोते, कोकिले, सारसे च सदश एव प्रणयप्रक्षेप भवताम्।'

'अथ किम्।'

'यत्र अन्यान्ये सर्वे प्राकृता' प्राणिन प्रेमास्पदा, तत्र मानवाः क्व बहिष्क्रियन्ते! मानवा ' मानवाः स्वार्थायत्ता वासनावासित हृदयाश्च भवन्ति। अपि नैवम् ?'

निखिल एव ससारो वासनामयो विद्यते। का कथाऽऽवयोः। किमवासनिकमत्र पश्यति भवान्। आम्, इत्थं कथयितुम् समर्थो भवान् यदरा ससारो वासनां विशालयति, येन वय समूर विलोपयाम।

यदासीदावरणम् बुद्धौ तन्नाशमाप तस्या वाणीविलासेन। मवान् कुसुमितान् पश्यति कुमारः। समक्षे स्थिताम् तामुवाच सः।

वल्लभे! आसमहमधकार एव। त्वम् सौन्दर्यस्य सजीवा प्रतिमाऽसि। प्रकृतिः साकमुपस्थिताऽसि त्वाम्।

लज्जावशा मा किमपि न ब्रवीति। सकुचिताया अस्या भालदेशे स्वेदबिन्दवोऽद्भुतन्। पुनरुवाच सः।

प्रिये! त्वमुपेव कुसमिताऽसि। वनकुसुम इव आनन्दमर्मयसि गातुमपि पारयसि ? गायति सा इत्थम्—

प्रणयति निखिल· ससारः
नृत्यति बहुधा गाते बहुश ।
अगाधोऽयं पारावारः
प्रणयति निखिल· ससारः ॥

शृंगारास्पदे ! अनश्यन् खलु सकीर्णा विचारा । मम चेतस्तव गानं प्रणयाभया सम्यगालोकितम् जातम् । समस्तो जीवलोक एवास्माकम् प्रेमपात्रम्, किं पुनर्मानवाः । सत्यम् अलौकिकोऽय प्रणय-ससार. इत्युक्त्वा स ताम् बाहुपाशे समयन्यत् ।

पुन·श्रोतुमीहते चेतस्ता गीतिकाम् ।

पुनरपि साऽगात् ।

'प्रणयति निखिलः ससार'



# मनोरमा

श्री देवकीनन्दनशास्त्री

( अध्यापक महाराजसंस्कृतकालेज जयपुरम् )

मनोरमा यदा उच्चविद्यालयपरीक्षामुत्तीर्य, आंग्लमहाविद्यालये प्रवेष्टुं गता तदा महाविद्यालयस्य विचित्रं वातावरणं युवकयुवतीनां मिथो निःसकोचं वार्तालापञ्च दृष्ट्वा किञ्चिच्चकिता प्रसन्ना चात्मानं धन्यं मन्यमाना सञ्जाता। मनोरमा विज्ञानविशारदस्य श्रीप्रवीणचन्द्रमहाभागस्य एकाकिनी पुत्री आसीत्। वयसाऽष्टादशवर्षदेशीया किञ्चित्कृष्णवर्णा—किन्तु शुकनासिका विशाललोचना चासीत्।

प्रवीणचन्द्रः प्रतिष्ठिते ब्राह्मणकुले जन्म लेभे। स्वर्गवासी तस्य पिता, आसीत् वेदवेदाङ्ग-निष्णातो निवृत्तिप्रियः परमतपस्वी सिद्धान्तवादी च। परमाङ्ग्लानां शासनकाले भारते संस्कृत-पण्डितानां स्वस्य च वृत्तिदौर्बल्यं दृष्ट्वा तस्य हृदयं भृशमतपत्। पटसु स्वसन्ततिषु सर्वप्रथमं श्रीप्रवीणचन्द्रमहाभागं प्रवेश्याङ्गलमहाविद्यालये वैज्ञानिकं चकार। अद्य विज्ञानबलेन श्रीप्रवीणचन्द्रो नगराद् बहिः सुरभितशीतलसुखदवायुपरिकलिते, नवीनपद्धत्या निर्मिते स्थाने नलिकायन्त्रपरिलसिते, परितो गृहारामसमन्विते विशाले एकस्मिन् भवने निवसति। अस्ति गृहे मरुत्तरयानमपि। इङ्गित-मात्रेण तस्य संचालकः स्वामिनमुपसर्पति। सज्जीकरोति च मरुत्तरयानं त्वरितमेव। मनोरमा मरुत्तरयानेन महाविद्यालयं गच्छति, समायाति च। व्यतीतोऽभूत् भूयान् समयः। मनोरमा साम्प्रतं बी० ए० परीक्षामुदतरत् तृतीयश्रेण्याम्।

द्वाविंशतिवर्षवयस्का मनोरमा सम्प्रति एम० ए० कक्षायां पठति अर्थशास्त्रविषये। एतावत्कालपर्यन्तं महाविद्यालयीयजीवने तया यच्छिक्षितं तत्तु तृतीयश्रेण्या व्यक्तमेव, परन्तु यदशिक्षणीयं तच्छिक्षितं प्रथमश्रेण्याम्। प्रतिदिनं सहपाठिभिः सह चलचित्रदर्शनम्, परकन्दुकादिक्रीडनम् आमोदगृहेषु निःसकोचं सर्वविधं वार्तालापादिकं न केवलं शिक्षितमेवापितु तत्र प्राधीण्यमपि सम्प्राप्तम्।

प्रवीणचन्द्रो विचारयति स्म यद् भगवता तस्मै न दत्त पुत्रः केवल पुत्री प्रदत्ता। सैव पुत्रवत् परिपाल्या। सर्वविध सौकर्य दत्त तस्यै तेन। नारीस्वतन्त्रतापक्षपाती प्रवीणचन्द्र शिक्षायाः पूर्णविकासाय सदा प्रयतते। ग्रीष्मावकाशे यदि मनोरमा काश्मीरादिशीतप्रधानेषु स्थानेषु स्वसहपाठिभि सह भ्रमणाय मति करोति तर्हि प्रवीणचन्द्रस्तस्यै प्रसन्नेन चेतसाऽनुमति ददाति।

एकदा मनोरमया स्वसहपाठिनो मन्मथरायस्य समुखे स्वकीयः प्रस्ताव उपस्थापित एव लज्जा तनूकृत्य। 'किं भवान् मया सह विवाह कर्तुमभिकाङ्क्षति, तर्हि करोतु प्रतिज्ञाम्। प्रतिज्ञामन्तरा न भविष्यत्ययम् भवता पूर्णा मम कामना। मन्मथरायेण किञ्चिद् विहस्य स्वीकृत प्रस्ताव। मन्मथरायस्य समुखे प्रस्तावस्वीकरण प्रतिज्ञाकरणञ्च न किमपि महत्त्वपूर्ण वस्तु। विधात्रा मन्मथरायाय युवति जनाकर्षकमलौकिक रूप दत्तम्। रूपसाहाय्येन तेन बहवो युवतयो वञ्चिता।

एकदा मनोरमा विषण्णवदना उद्यानस्यैकस्मिन् काष्ठमञ्च उपविष्टा प्रतीक्षते स्म मन्मथरायम्। सहसैव समागतो मन्मथराय। दूरत एव तूष्णीं ता दृष्ट्वा प्रोवाच, मनोरमे! कथ खिन्नवदना, न चलिष्यमि किं चलचित्रदर्शनाय। मनोरमा न किञ्चिदप्युवाच, केवल दीर्घदीर्घा द्विना प्रश्वासास्तस्या हृदयान्नि सृता। मन्मथरायोऽपि तस्मिन्नेव मञ्च उपाविशत्। परिश्रम नाम क्षण विनीय पुनः प्राब्रवीत् गम्भीरया मुद्रया। अन्ततो गत्वा किं कारणमस्ति खेदस्य। कारणमन्तरा मया कथ प्रतिविधीयेत। अधुना मनोरमाया हृदयेन धैर्य परित्यक्तम्। सा मुक्तकण्ठ रुरोद, उवाच च सवाष्प गद्गदया गिरा। हा! किं करवाणि। क गच्छानि!! का मे गतिर्भविष्यति!!! शीघ्रमेवाह माता भविष्यामि। दयस्व! कठोरहृदय!! दयस्व!!!

मनोरमा ब्राह्मणपुत्री। मन्मथरायस्तु वणिक् पुत्र। उभयो वैवाहिको विधि. सामाजिकै कथ क्षन्तव्य स्यादिति विचारयतो मन्मथरायस्य हृदय वेगेनाकम्पत।

मनोरमा जयपुरनिवासिनी। मन्मथरायस्याप्यस्त्येक जीर्णशीर्ण गृह जयपुरनगरे। मन्मथरायस्य ज्येष्ठभ्राता राजेन्द्रराय मोहमय्या व्यापार करोति। अस्य पिता धर्मराय एव पुरा मोहमयीं गतो वाणिज्येन स्वकुटुम्ब बिभर्ति स्म। पितर्युपरते तज्ज्येष्ठपुत्रो राजेन्द्ररायस्त-

रकार्यं सम्भालयति। राजेन्द्ररायः सम्प्रति लक्षाधिपतिषु गण्यते। अयमस्य कनिष्ठभ्राता मन्मथराय। अनयोर्माता कमलापि जीविताऽस्ति। सा स्वज्येष्ठपुत्रस्य राजेन्द्ररायस्य पार्श्वे मोहमय्यामेव निवसति। अप्यस्ति राजेन्द्ररायस्य स्त्री, बालकौ, कन्ये च। यदा कदा माता कमला स्वज्येष्ठपुत्रस्याग्रे मन्मथरायस्य वार्तां करोति, तदा राजेन्द्रराय सखेदं वक्ति —

'किं करवाणि मात! मन्मथरायस्य समस्या दुःसाध्या। स मम हितवचनं न शृणोति। मदुक्तं चित्ते न दधाति। जयपुरस्थिताङ्गलमहाविद्यालयीयछात्रावासे सकलमपि जीवनयापनं तस्मै रोचते। मयाऽनेकवारमुक्तम्, यद् भ्रात! पठनव्याजेन कालयापनं न समीचीनम्। किमपि कार्यं कुरु "यस्तु क्रियावान् पुरुषः स विद्वान्"। परन्तु तस्याग्रे सर्वं मदुक्तं वैयर्थ्यमेति। मया तु निश्चयः कृतो यन्मन्मथरायः कुत्रापि निवसेत्, कुत्रापि गच्छेत्, स प्रतिमासं शतरूप्यकाणि मत्तो लभेत, नातोऽधिकं वक्तु श्रोतुञ्च कामये। माता पुत्रस्य तथ्यं वचः श्रुत्वा मौनमालम्बयति स्म।

अथ मन्मथरायो मनोरमाया हृदयविदारकं वचः श्रुत्वा स्वजीवने प्रथमवार–केवलं प्रथमवार–भयभीतोऽभवत्। भयस्य कारणं सुस्पष्टमासीत्। प्रकाशमायातायां मनोरमादूषितवार्तायां नवसभ्यता-पक्षपाती प्रवीणचन्द्रो मनोरमाऽनुरोधेन मया सह अस्या विवाहं कामम नुमन्येत नाम, अवश्यचेतसा प्रसन्नमनसा वा, परन्तु प्राचीनरूढिवादी राजेन्द्ररायो माता च विवाहमिमं कथं मन्येत, कथञ्च सहेत दुःखदात्रीमिमां वार्ताम्। पूर्वत एव मम भ्राता ममोपरि क्रुद्धः। अपराधकारिणा मया तस्याग्रे कथं स्थातुं शक्येत। भवतु सम्प्रति जयपत्तनेऽवस्थानं मे सर्वथाऽनुचितम्। अहं मोहमयीं गत्वा तत्रैव वत्स्यामि। नानाविधासु फलवल्लिकासु भृङ्गायितो मे किं मनोरमया प्रयोजनम्। प्रकाशं प्रतेमनोरमे! अस्ति नगरेऽस्मिन् केशवनाथनामा वैद्यराज। स एव तवोदरव्याधिं समूलमुत्पाटयिष्यतीत्युक्त्वा प्राचलत्। मनोरमाऽपि तस्मात्स्थानादुत्थाय शनैः शनैः स्वभवनं प्रविष्टा।

प्रवीणचन्द्रः प्रतिमासं गृह्णाति राजतो मुद्राणां द्विसहस्रम्। ततोऽप्यधिकार्थाः तस्य कृते निःशुल्का विद्युद्व्यवस्था जलव्यवस्था यानव्यवस्था सेवकव्यवस्था च। प्रवीणचन्द्रस्य द्वौ भ्रातरौ तिस्रो भगिन्यश्च। यासां विवाहा प्रवीणचन्द्रेण विशेषेण संपादिताः। सन्ति

तासां पुत्राः कन्याश्च। पुत्राणामपि विवाहा जनकेनैव विहिताः। द्वयोर्भ्रात्रोर्ज्येष्ठोऽतीव दीनोऽपि बहुकुटुम्बी। द्वितीयश्च किञ्चिदर्जयति, तस्य केवलमेकः पुत्रः। प्रवीणचन्द्रस्य धर्मपत्नी विमला दयावती। स्वभर्तुर्भ्रातृपुत्रेषु सुतासु च स्वसन्ततिवत् स्निह्यति। तान् शिशून् दृष्ट्वा स्वस्य पुत्रराहित्यमपि विस्मरति।

एकदा मस्तरयानेन कुत्रचिद् गच्छन् प्रवीणचन्द्रो मस्तरयानदुर्घटनया चिकित्सालये सुयोग्यैर्बहुभिश्चिकित्सकैः सम्यक् चिकित्सितोऽपि मृत्युमवाप। सहसा पपात विमलाया मनोरमायाश्चोपरि वज्रपातः। सम्बन्धिनो हितैषिणश्च सर्वे समागत्य रुरुदुः। दुर्दैवविलसितम् प्रवीणचन्द्रस्य निवासस्थलमधुना महाशोकस्थलं सञ्जातम्। आसन् शवयात्रायां सहस्राधिकाः पुरुषाः। सभा अभवन् स्थाने स्थाने, स्थानीयसमाचारपत्रैरपि श्रीप्रवीणचन्द्रमहाभागस्य लघुजीवनवृत्तान्तं चित्रमयो मुख्यस्थाने समुट्टङ्कितः। परन्तु किमेतेन। मनोरमाया विमलायाश्च महाशोकं भगवन्तमन्तरा कः खलु दूरीकर्तुं शक्नुयात्।

स्वर्गं गते प्रवीणचन्द्रे मास एको व्यगच्छत्। सौभाग्यवञ्चितायाः विमलाया अपारं दुःखं कः खलु वर्णयेत्। विधात्रा तस्याः सर्वं स्वमपहृतम्। विशालेऽस्मिन् भवने एकाकिनी कथं तिष्ठेदिति मत्वा प्रवीणचन्द्रपूर्वजैर्निर्मिते नगरस्य बाह्यानेकस्यां स्थिते लघुगृहे प्रवीणचन्द्रस्य भ्रातरौ सपरिवारौ न्यवसताम्—न्यवसत् विमला मनोरमा च। मनोरमाया अध्ययनं परिसमाप्तमभूत्।

अपत्ये मन्मथरायस्योपरि राजेन्द्रराय प्रसन्नः। मन्मथरायो भ्रातरमनुकरोति। मोहमयीं गतेन मन्मथरायेण समाचारपत्रेषु पठितम् यन्मस्तरयानदुर्घटनया श्रीप्रवीणचन्द्रस्य मृत्युरिति।

पञ्चत्वं गते पितरि मनोरमाया जीवनेऽभूतपूर्वं परिवर्तनमभूत्। न जाने मनोरमायाः सा विलासप्रियता कुत्र तिरोहिता, या प्रवीणचन्द्रस्य सम्मुखम् आसीत्। या प्रतिदिनं न्यूनातिन्यूनं त्रिवारं वस्त्रपरिवर्तनं करोति स्म, सा सप्ताहमपि एकेनैव वस्त्रेण कार्यं करोति। मनोरमाया भोजनेऽपि समभूत् महत् परिवर्तनम्। पुरा भोजने यदि लवणस्य किञ्चिदधिकता न्यूनता वा भवेत्तर्हि भृत्यस्योपरि तत्पात्रं निक्षिप्य सकोपमरटत्, परन्तु साम्प्रतं दूषितमपि भोजनमभ्याहरति। सर्वदा खिन्नवदना तिष्ठति। न हसति नाधिकं वदति, दशाग्निना

मनोरमाया दृष्ट्वा माता विमला दुःखिताऽपि दुःखमनुभवति समधिकम्।

समाचार-पत्राणां वार्षिकं शुल्कं वर्षारम्भे एव गृहीतव्यं भवति। यतः कानिचित् पत्राणि समायान्ति। मनोरमा तेषां वाचनेन स्वकीयं समयं यापयति। अद्य आवश्यकता शीर्षके दृष्टि स्थिराऽभून्मनोरमाया।

वैधव्यस्य घोरं दुःखमनुभवन्ती विमला मनोरमाया पूर्ववत् प्रसन्नं मुखमदृष्ट्वाऽसह्य दुःखमन्वभवत्, परन्त्वद्य मनोरमां किञ्चित् प्रसन्नां दृष्ट्वा सस्नेहमुवाच–पुत्रि! त्वमेव मे जीवनस्याधारभूता। त्वदर्थमेवाहं जीवामि। अद्य किञ्चित् प्रसन्नां त्वां विलोक्य हर्षेणाहमुत्फुल्ला। मनोरमा मातुर्वचनं निशम्य जगाद–मातः! अस्ति मम प्रसन्नतायाः कारणमेकम्। कतिपया दिवसा व्यत्ययुः। मयानिवेदनपत्रमेकं प्रेषितं लखनऊनगरे। तत्रावश्यकतासीदेकस्या अध्यापिकायाः। अद्य मम निवेदनपत्रस्योत्तरमायातम्। यन्मम नियुक्तिः संजाता सहायिकाध्यापिकापदे। शीघ्रं तत्र मया गन्तव्यं भवेत्। जननि! प्रसन्नेन चेतसाऽऽज्ञापयतु गमनाय। वेतनं यद्यपि स्वल्पं मिलिष्यति परन्त्वसह्यं दुःखमनुभवन्मे मनः शान्तिमनुभविष्यतीति दृढो मे विश्वासः। अभूतां विमलाया नयने सजले मनोरमाया वचो निशम्य, परन्तु दृढनिश्चयां तां परिज्ञाय न किञ्चिदप्युवाच विमला। मनोरमाऽजानन्मौनं स्वीकृतिलक्षणमिति।

लखनऊस्थितकन्यामहाविद्यालये प्रधानाध्यापिकयाऽन्याभिरध्यापिकाभिः सह मनोरमाया व्यवहारोऽतीव कोमल आसीत्। मनोरमाया मार्दवं विलोक्य सर्वा एव अध्यापिकाश्चकिता अभूवन्।

लखनऊस्थितकन्यामहाविद्यालयस्य प्रधानाध्यापिका या शिष्टधर्मावलम्बिनी दयावती चासीत् तस्या अग्रे मनोरमया स्वमनोदुःखं निवेदितम्। प्रधानाध्यापिकया सर्वः खलु प्रबन्धो विहितः। कालेऽरिष्टगृहे प्रविष्टा मनोरमा सुतमेकमसूत।

भगवान् भास्करः सकलमपि धरातलं सन्तापयति तीक्ष्णैः किरणैः। लखनऊकन्याविश्वविद्यालयस्य सर्वा बालिका अध्यापिकाश्च सर्वा अद्य प्रसन्ना दृश्यन्ते। ग्रीष्मावकाशस्य घोषणाभूत्। कन्याविद्यालयस्य प्रायः सर्वा एवाध्यापिका बहिर्गन्तुं सज्जिता आसन्।

मनोरमाया नवजातशिशु साम्प्रतं मासस्यैकस्याभूत्। न जाने किं विचार्य मनोरमाऽपि शिशु गृहीत्वा जयपत्तन प्रति प्रचलाल। रात्रौ नववादन-समये वाष्पयानगन्त्री जयपुरविरामस्थले समायाता। अङ्के शिशु निधाय वहिर्निःसृत्य मनोरमा त्रिचक्रायामेकस्यां प्राविशत्, किन्तु त्रिचक्रा मनोरमागृहमार्गं त्यक्त्वा रामनिवासोद्यानमार्गं प्रति प्रतस्थे। रामनिवासोपवने मनोरमा त्रिचक्रातोऽवातरत्, इतस्ततश्च भ्रमणञ्च कर्तुं प्रारभत। किञ्चित्समयानन्तरं शून्यस्थाने स्थित एकस्मिन् काष्ठमञ्चे उपाविशन्मनोरमा रुरोद च। अन्ते हृदयं वज्रसदृश विधाय शयानं शिशुं तत्रैव काष्ठमञ्चे परित्यज्य वेगेन स्वगृहं प्रति प्रतस्थे।

अद्य बभूव दल-पतेरानन्दकुमारस्य पक्षो विजयी हॉकीक्रीडायाम्। किन्तु पराजयमनुभवद्भिर्विपक्षिभिः क्रीडकैः क्रीडानियमानुल्लङ्घ्य दत्तो दण्डप्रहारो वामचरणे आनन्दकुमारस्य। आनन्दकुमारो वारंवार पीडामनुभवन् विश्रम्य विश्रम्योद्यानतो गच्छति गृहं प्रति। श्रुतस्तेनोद्यानस्यैकस्मिन् कोणे बाल-रोदनध्वनिः। ध्वनेरनुसारी गच्छन्नानन्द-कुमारः काष्ठमञ्चेशयानं क्रन्दन्तमेकं मासजातं शिशुमवलोकयति। यदा भवेदस्य मातात्रैव कुत्रापि इति जिज्ञासायां न सफलोऽभूत्तदा शिशुमुत्थाप्य स्वगृहं प्रति प्राचलत्।

आनन्दकुमारोऽस्मिन्नेव वर्षे आङ्गलचिकित्सामहाविद्यालये पठित्वा आङ्गलचिकित्सकस्यान्तिमसुपाधिमवाप। समुद्घाट्य विपणिमेकां पारिश्रमिकं भेषजमूल्यञ्च गृहीत्वा जनानां चिकित्सां करोति। आङ्गलचिकित्सामहाविद्यालये गमनस्य सम्प्रति न किमपि प्रयोजनं किन्तु क्रीडानुरागी यदा कदाचित् क्रीडायान्तु सम्मिलितो भवत्येव। अस्ति, आनन्दकुमारस्य वृद्धः पिता, माता, द्वादशवर्षवयस्का भगिनी च। आनन्दकुमारस्य सम्पन्नोऽयं लघुः ब्राह्मणपरिवारः। पित्रोर्दुःखमिदमेव यदानन्दकुमारो विवाहं न करोति। न जाने दुर्भावनेयं कुतः समायाता।

अद्य आनन्दकुमारस्य गृहे महान् कोलाहलः। पिता गम्भीरो भूत्वा वदति प्रियपुत्र! किं करिष्यसि बालकस्य कथञ्च पालयिष्यसि, माता हसित्वा कथयति-पुत्र! किं त्वं साम्प्रतमपि बाल एव। अतिप्रसन्ना भगिनी कथयति-भ्रातः! रक्षेयं शिशुमहमस्याहर्निशं साहाय्यं करिष्यामि। भगिनी-सहायेन तेन विविधैरुपायैः बालकस्य

पोषणं प्रारब्धम्। बालस्य नाम वनविहारीति चकार। शिशुरपि प्रतिदिनं बालचन्द्र इवावर्धत।

मोहमयीतः समायातो मन्मथरायो भ्रमणाय जयपत्तने। आनन्दकुमारः पूर्वत एव मन्मथराय जानाति स्म। विपणिस्थित आनन्दकुमारो दूरत एव मन्मथराय दृष्ट्वा तमाहूयत्, आवोचच्च सस्नेह मित्र! चिराद् दृष्टोऽसि। कुत्र वससि? किं करोषि? मन्मथरायोऽवदत्, अद्यत्वेऽहं मोहमय्या निवसामि, व्यापारञ्च करोमि। जयपत्तनेऽस्ति ममैका प्रेयसी स्वर्गीय-श्रीप्रवीणचन्द्रमहाभागस्य पुत्री मनोरमा नाम। आनन्दकुमारेण सहासमुक्तम्। एवमेवम्। पुनरप्युवाच मन्मथराय। किन्तु मित्र! सा गर्भवती बभूव। तदा,ता त्यक्त्वाहं मोहमयीं प्रति प्राचलम्। यतो हि मम सिद्धान्तोऽयं यत् 'खगा वीतफलं वृक्षं जारो भुक्त्वा रतां स्त्रियम्', मन्मथरायस्य वचः श्रुत्वा, अनन्दकुमारस्य मुखमुद्रा गम्भीराऽभवत्।

सायं रामनिवासोद्याने भ्रमन्नानन्दकुमार किं पश्यति यन्मन्मथराय कयाचित् स्त्रिया सह वार्तालापं कुर्वन् तस्मिन्नेव काष्ठमञ्चे समुपविष्टोऽस्ति-यतस्तेन शिशुर्वनविहारी लब्धः। प्रच्छन्नेन तेन तयोरस्फुटा वार्तालापा अपि श्रुता। मम हृदयखण्डमत्रैवाहमत्यजमिति स्त्रिया उक्तिस्तेन स्पष्टतया श्रुता।

आनन्दकुमारेण बहुभिरकाट्यैस्तर्कैर्बोधितोऽपि मन्मथरायो मोहमयीं गतः। नेच्छति मनोरमया सह विवाह कर्तुम्। तदा, आनन्दकुमारः शोचति, किं करणीयमस्तीति। कदा माता स्वपुत्रं पालयिष्यति।

एकदा, आनन्दकुमारः पितरं मातरञ्चावादीत् यत्, पित! मातश्च! यल्लोके पितरो मातरश्च स्वपुत्राणां विवाहान् कुर्वन्त सुखं स्यश्चावलोकयन्ते, तदा भवन्तः किमिति मे विवाहं न संपादयन्ति।

पिता माता चावदन्मनसि, अद्य मे सफलं जन्म, अद्य पूर्णा मनोरथा। कया सह विवाहं कर्तुमभिकाङ्क्षसि, इति पिताऽपृच्छत्। तात! तव पिता किं पृच्छति? शीघ्रातिशीघ्रं वध्वा मुखकमलं कदा द्रक्ष्यामीति पूरयतु जगदीश्वरो मेऽभिलाषमिति माताऽवदत्।

आनन्दकुमारेणोक्तम्, अस्ति नगरेऽस्मिन्नस्माकमेव ब्राह्मणकुले स्वर्गीयस्य श्रीप्रवीणचन्द्रमहाभागस्य परमसाध्वी कन्या मनोरमा

नाम। तया सह विवाहं कर्तुमभिवाञ्छामि। पितरौ जगदतुः। अपारहर्षास्पदममृतमिव द्वितीयं ते वचस्तात!

मनोरमया सह आनन्दकुमारस्य वैवाहिको विधिः वैदिक्या पद्धत्या निर्विघ्नतया सम्पन्नः। दुहितृश्वशुरगृहगमनसमये विमला द्विराण्यश्रूणि लोकदर्शनायामुञ्चन्मनसि तु पाणिग्रहणमिदं स्वर्गीयस्य स्वपत्युः सुकृतस्यैव फलमेतदित्यमन्यत।

श्वसुरभवनं प्रविष्टा मनोरमा पत्युः क्रोडे क्रीडन्तमकुतोभयं बालं निरीक्ष्य किञ्चिच्चकितापि प्रसन्नाऽभवत्। किमिति विचिन्त्य खिन्नवदना, किमिति विचार्य साश्रुमुखी बभूवेति मातृहृदयमेव विजानाति नान्यः कश्चित्।

अथ मनोरमाया सौभाग्यरात्रिः। रात्रौ नववादनसमये शयनगृहं प्रविष्टा मनोरमा घण्टात्रयमेकस्मिन्नेव विषये स्वपतिना आनन्दकुमारेण साकं वार्तालापमकरोत। आनन्दकुमारोऽन्वे जगाद—

इदमस्ति जगत्सर्वं वासनावेष्टितं सदा।
पालयैन शुन भद्रे! एप वैवाहिको विधिः॥

●

# नारीमतिवैभवम्

श्री दीनानाथत्रिवेदी 'मधुप' साहित्याचार्यः

( म० सं० कालेज, जयपुरम् )

आसीत्पुरा समवाप्तविविधविभवो वैश्यवंशसम्भवो गोविन्ददासनामधेय परसंविधेय प्रकृत्याऽऽकृत्या च मनोहर कश्चन श्रेष्ठिवरः महता विपश्चिता मतमनुष्ठाता विधाता चानल्पस्य कार्यकलापस्य निजव्यापार-कलाकौशलेन। नगरनिवासिनो नाना जना अपि निकट मस्य चागत्य विचार्य-कार्य्य-परामर्शं गृह्णन्ति स्म। अनेक विधवाणिज्य-परेण श्रेष्ठिवरेणानेनानुकूले किल काले रूप यौवनाभ्यामात्मना सदृशी शीलानाम्नी भार्योढा। परमासीत्तयोर्मिथो विचारेषु भेद। व्यापारेण धनमर्जयतस्तस्य मनसि समुदभवदखर्वो गर्वं। रम्यं हर्म्यं दुग्ध-फेनधवला शय्या-प्रच्छदा, धौतानि शुभ्राणि सूक्ष्माणि च वस्त्राणि, महार्घमणि मण्डिता सुषमाकरा हेमालङ्काराः, राजतानि सौवर्णानि पात्राणि, दासा दास्यश्च मरुत्तराख्य यानमित्यखिलमपि ममैव मत्या विलसितमिति। प्रत्यह यदा स गृहमागत्य भोजनं करोति स्म सदैकदा तयोर्दम्पत्योरेव प्रवृत्त सलाप।

गोविन्ददास—इह हि पुरुष एव सर्वमपि कार्यं कर्तुमीष्टे। प्रिये! त्वमत्र किं मन्यसे?

शीला—कर्मक्षेत्रे ससारेऽत्र स्त्रीमन्तरैकाकी पुरुषो न किमपि कर्तुं प्रभवति। किमपि गेहकृत्य स्त्री सम्पादयति, किमपि भृत्यादिकं च पुरुषः।

तथा हि—

> यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
> नारीं विनैव मर्त्योऽपि कर्तुं किमपि न प्रभु॥

गोविन्ददास कान्ते! मा मैवं वद। यतो हि—

> यस्य गृहे न भार्याऽस्ति तदा तस्य गृहेऽप्यहो।
> सममपि वित्तेन कार्यं सिध्यति वल्लभे॥

शीला —यथाऽऽज्ञापयति भवान्। इत्यभिधाय सर्वं भूषणादिकं धन तया तस्मै प्रत्यर्पितम्।

एवं निजभार्यया सह प्रतिद्वन्द्विताम्ुररीकृत्य स श्रेष्ठी गोविन्ददास सकलामपि स्वीयां सम्पत्तिं समादाय, तत्रत्यं सर्वविधमपि व्यापारञ्च समाप्य देशान्तरं प्रति प्रस्थितः। सर्वोऽप्ययं परस्पर-प्रतिद्वन्द्विता-विषयस्तयोरेवावातिष्ठत। तत्रत्यो जनश्च न कश्चिदपि रहस्यमिदम-जानात्।

गोविन्ददासस्तु देशान्तरं प्राप्य यथापूर्वं व्यापारादिकं कुर्वाण-स्तत्रैव कियन्त कालमुवास।

इह हि तस्य जाया शीला च तत्र सर्वत्र वृत्तमिदं प्रथितमकरोत् यन्मम गृहपतिः प्रचुर-धनार्जनैषणया देशान्तरमगमत्। यद्यप्यधुना श्रेष्ठिनो गृहे यथापूर्वमनुचरवर्गस्तु नासीत्, अथाऽपि कतिचन सेवका सेवमानाः शीलामवर्तन्त एव। एष्वेवैकतमः प्राक्तनो गणनालेखक (कोषाध्यक्षः) मोहनाख्योऽप्यभूत्। यस्य व्यापारदाक्ष्येण श्रेष्ठी गोविन्ददासोऽपि पूर्वं प्रभूत वित्तमलभत।

एकदा शीला मोहनमाहूयाऽगादीदपूर्ववत् साम्प्रतमपि धनोपा-र्जनार्थं प्रयतनीयमिति।

मोहन —(शीलां प्रति) किमपि कार्यं कर्तुं यदा जनः प्रवर्तते, तदा प्रथमं भवति वित्तस्यावश्यकता। अतः प्रयच्छतु भवती पञ्चसह-स्रपरिमितं द्रव्यम्।

शीला—इदानीं मत्सविधेऽपि इयद् द्रव्यन्तु नास्ति। परमेतदर्थ-मुपायस्त्वय वर्तते यन्मदीयामिमां मञ्जूषां लौह-पाषाणैरेव प्रपूर्य प्रतिवेशिनः सार्थवाहस्य गृहे न्यासरूपेण निक्षिप्य पञ्चसहस्ररूप्यकाणि ग्राह्याणि-इति। परं सा मञ्जूषा तावदनुद्घाटितैव सरक्ष्या भविष्यति। पश्चात्तद्रूप्यकाणि दत्त्वा मञ्जूषेयमुन्मोचनीया।

मोहनः—अभिनन्दामि भवत्या उपायमिमम्। अहमधुनैव गत्वा तं याचे।

इत्युक्त्वा स प्रतिवेशिनः सार्थवाहस्य समीपं गतः आर्य! भवन्तं द्रष्टुमिच्छामीत्यवोचत्।

सार्थवाहः—आगम्यतामितस्तावत्। किमर्थं खल्वद्याऽऽगम-नाय कृत आयासः?

मोहनः—श्रेष्ठिन्! महतः कार्यवशान्मम श्रेष्ठिनो गोविन्ददासस्य धर्मपत्नी शीला मन्मुखेन पञ्चसहस्ररूप्यकाणि भवन्तं याचते। एकाममूल्यवस्तुपूर्णां वृहन्मञ्जूषाञ्च न्यासरूपेण भवत्सविधे स्थापयितुमिच्छति।

सार्थवाहः—तथास्त्विति तामादाय तावद् द्रव्यं दत्तवान्।

मोहनः—(आनीय) भगिनि! गृह्यतां पञ्चसहस्रमुद्राः।

शीला—गृहीत्वाऽहमेतामपि किं विधास्ये? द्रव्यमस्माभ्यं भवतैव तथा वाणिज्ये विनियोगः कर्त्तव्यः येनाल्पकालेनैव धनवृद्धिः साधीयसी स्यात्। भवतां भागोऽप्यत्र भविष्यत्येव।

स्वल्पः कालो व्यतीयाय।

मोहनः सः स्वकीयसुधीप्रभावेण निश्छलेन मनसा च पञ्चसहस्रमुद्राभिरचिरादेव विपुलं वित्तमुपार्जितवान्। येन च यथापूर्वं सर्वं समपद्यत। पञ्चसहस्रमुद्राः प्रदाय च तस्मादुत्तमर्णात्सार्थवाहान्मञ्जूषाऽपि समभूदुन्मोचिता। शीलाऽऽज्ञया चैकनूतनभवन-निर्माणमपि समारब्धमभवत तेन।

अथ च शीला गृहरक्षार्थं च रक्षापुरुषान् नियुज्य लब्धभर्तृसमाचारा च सखीं प्रियान्विकां निगमिपुरमितो नगरादुदचलत्। यस्मिन्नगरे स आसीत् श्रेष्ठिमहोदयस्तत्र गत्वा तद्भवन-सङ्केतञ्चोपलभ्य तन्निकटस्थित एव चैकस्मिन् गृहे भाटकं (भाड़ा) तद्गृहस्वामिने प्रदाय न्यवसत्। तत्र स्थितैव सा व्यचिन्तयत् द्रव्यन्तु प्रभूतमुपार्जितमेव। सम्प्रति तु सुनीतेरस्त्युपायः समनुष्ठेयः। एतदर्थं चाऽहं गोपालिका-वेषं विधाय दुग्ध-दानमिषेण च तदन्तिकं गमिष्यामि-इति। अतो दुग्धार्थं तयैका महिषी क्रीता। तत्परिचर्यार्थं चैकस्याऽनुचरस्य कृतः प्रबन्धः।

एकदा च सायं दुग्धभाण्डमादाय गोपाङ्गना गोपजातिपरिधानैरेव वासोभिरलङ्कारैश्च स्वदेहं समलङ्कृत्य तस्य निजस्य पत्युर्भवनमयासीत्।

इदानीं गृहागतश्च गोविन्ददासोऽपि सर्वं दिनं कार्येषु व्यापृततया विश्रामं कर्तुमिच्छुर्वेत्रासनासीनश्चिन्तामग्नस्तिष्ठति। अत्रान्तर एव भवनस्य प्राङ्गणे समागत्य गोपीवेषधारिणी तदीयैव रमणी शीला तस्याऽनुचरमप्राक्षीदयत् तव स्वामी क्व वर्तत इति? तस्या मनोहरस्य मधुरस्य च कण्ठस्य ध्वनेः श्रवणेन सहसा तस्य ध्यानमुद्रा समभू-

द्रुग्ना। सत्वरं समुत्थाय चोच्चैरवादीत्स । अहमत्र स्थितोऽस्मीति।

शीला—( स्वरं प्रत्यभिज्ञाय ) अहमस्मि, इत्युक्त्वा सलज्जा तत्रैव स्थिताऽभूत्।

गोविन्ददास—( उत्थाय, नीचैः प्राङ्गणेऽवलोकयन् ) काऽसि त्वम्? किमर्थञ्चेह समायाता?

शीला—महाभाग! मम गेहे महिषी वर्तते।

गोविन्ददास—आम्। वर्ततां नाम। किं तया?

शीला—(दैन्यभाव नाटयन्ती) अद्य तया महिष्या यथाकालं दुग्धं न दत्तम्। अतः क्षीरमिदमवशिष्टमभूत्। नास्मिन् समये चान्य कश्चन क्रयिक (ग्राहक) समायातीति हेतोरिह भवतामन्तिकमुपागताऽस्मि।

गोविन्ददास—( स्वगत ) अहो लावण्यमस्या मृगशावाक्ष्या। मधुराऽऽकृतिश्चैतस्याश्चेतो मम दर्शनमात्रेणैव प्रसभमपाहरत्। ( प्रकाश ) सोहन! एतामिह प्रवेशय।

सोहन—यथाज्ञापयति देव। ( इति तामानीय ) इह स्थिताः खल्वेते श्रेष्ठिमहोदया। समीपमुपयाहि।

शीला—( पयःकुम्भमादाय ) तन्निकटमागत्याऽधः प्राङ्गण एवोपाविशत्। अयदद्य गृह्यतां श्रीमता। पञ्चसेटकपरिमितमिदं हि पय—इति।

गोविन्ददास—( मध्य एव सेवकं प्रति ) सोहन! सांप्रतं बुभुक्षाऽतिमात्र बाधते माम्। अतो यदि किमपि सिद्धं वर्तते भक्षितुं तर्हि तदुपस्थापय।

सोहन—स्वामिन्! अधुना सिद्धन्तु नास्ति किमपि। परमहम विलम्बेनैव पक्त्वाऽऽनयामि। इत्यभिधाय स पाकशालां प्रविष्टः

शीला—श्रीमतां श्रीमती पत्नी विद्यते न वा?

गोविन्ददास—नास्ति। भोजनादिकं सर्वमपि गेहकृत्य सोहन एव सम्पादयति। आस्तां तावत्। अत्र कुत्र तव गृहम्?

शीला—भवत्समीपमेव।

गोविन्ददास—( स्वगतं ) तदा त्वतिशोभनं जातम्। ( प्रकाश ) तर्हि प्रत्यहमिहागत्य भवत्याऽस्मभ्य पयः प्रदेयम्।

शीला—महाराज! तदा तु अनुगृहीताऽस्मि। अति वेला जाता। अनुजानीहि तावद् गृहगमनाय। गोविन्ददास—साधय तावत्, परं

पयोमूल्यं गृहीत्वा। इत्युक्त्वा स दुग्धमूल्यमदात्तस्यै, साऽपि तदानीं सकटाक्षनिक्षेपं पुनः पुनस्तन्मुखमभिवीक्षमाणा मन्दं मन्दं निजं गृहं प्रत्यागतवती।

गोविन्ददासस्तु तद्वदनसौन्दर्याक्षिप्तचेताः निशि निद्रामपि न लब्धवान्। प्रातः समुत्थाय विधाय चाह्निकं कृत्यमनिच्छन्नपि विहितात्पभोजनश्चापणं गतवान् परं, तत्रापि स मनसि शान्तिं न समासादितवान्! तामेवानुचिन्तयन् महता कष्टेन तद्दिनमत्यवाहयत्।

अपरे च दिवसे चायमापणादन्यदिनापेक्षया शीघ्रमेवाऽऽगत्य तदागमनवेलां प्रतीक्षमाणो भवनपृष्ठमारूढश्च गतागतं कुर्वन्नासीत्। क्षणानन्तरमेव चास्ताचलशिखरमध्यारूढो भगवान् मरीचिमाली। सन्ध्याकालश्च समुपस्थितः। ततः सोऽपि नीचैरागत्य भवनस्य द्वारि दत्तदृष्टिरभूत्।

शीलाऽपि ममाऽपरोऽपि मनोरथो नूनमचिरादेव साफल्यमेष्यतीत्यमन्दानन्दसन्दोहप्रफुल्लवदनारविन्दा दुग्धघटं शिरस्याधाय सायमप्युदनवेलायां गोविन्ददासस्यान्तिकमुपागमत्।

गोविन्ददासः कनककमनीयकान्तिमविमुकुमाराङ्गीं ललनाललामभूतां समागतां तां नताङ्गीं निर्वर्ण्याऽवादीत्—आगच्छ, इतो निषीदेति।

शीला निर्दिष्टे स्थाने समुपविष्टाऽभूत्।

गोविन्ददासः—( सेवकं प्रति ) आत्मनो नियोगमनुतिष्ठ तावत्।

सेवकः—यथाज्ञापयति श्रीमान्, इत्युदीर्य ततो निष्क्रान्तः।

गोविन्ददासः—इत आस्यताम्। कथ्यतां तव किं प्रियं करवाणि?

शीला—( सस्मितं ) मम दुग्धं तु भवता गृह्यत एव। अतः परं किमन्यत् प्रियं मे स्यात्?

गोविन्ददासः—न हि, विश्रब्धं तावद् भण्यताम् किमन्यदभिलष्यते भवत्या?

शीला—( सभ्रूभङ्गं ) श्रेष्ठिन्! 'वक्तुं सुकरमध्यवसितुन्तु दुष्करम्' इयं हि लोकस्थितिः।

गोविन्ददासः—( स्वगतं ) अस्या वचनमनुशृण्वतो मम मनसि कृतं पदं कुतूहलेन। ( प्रकाशं ) भद्रे! न खलु चलति वाक्यं सज्जनानां कदाचित्' इति सत्यं विद्धि।

शीला—यद्येवं तर्हि-अहमपीह करणीयं किमपि कार्यं करिष्ये। येन मम भोजनवसनादिचिन्ताऽपि चेतसो दूरीभविष्यति। (स्मरणमभिनीय) यामि। यामो यातस्तावत्।

गोविन्ददास—(स्वगतं) अनया सह संलपतो ममाऽनुरागो गतोऽतिभूमिम्। (प्रकाशं) तमिस्रायामधुना कथमेकाकिनी गमिष्यसि? सम्प्रतमिहैव स्थीयताम्। प्रातरितश्च गम्यताम्।

शीला—(सव्रीडं) 'महतामाज्ञा शिरोधार्या' इत्येष शिष्टाचारस्तु मया पालनीय एव। अतोऽत्रैव स्थीयते।

एवमानन्दमनुभवतोस्तयोरेको मासो व्यत्यगात्। भगवतो भवानीपतेः प्रसादाच्च शीला गर्भिणी जाता। अन्ते चैषा निज मनोरथं सफलं मन्यमाना तस्मात् श्रेष्ठिनः स्वर्णांगुलीयकं तन्नामाङ्कितं प्रेमोपहाररूपेण समादाय ततः स्वनगरमेव प्रत्यागमत्।

तत्राऽऽगता च सा यथापूर्वं सर्वमपि कार्यं परिचालयन्त्यस्थात्। दशमे च मासि सा सर्वलक्षणविराजमानं सुकुमारं कुमारं प्रासूत। दिने दिने च स वर्धते स्म। नवीने निर्मापिते भव्ये भवन एव शिशुं लालयन्ती सानन्दं न्यवसत्। एकवर्षदेशीयो यदा तदीयो बालः स संवृत्तः, तदा श्रेष्ठी गोविन्ददासोऽपि गृहदशां परिज्ञातुं प्रत्यागतवान् उपलभ्य च गृहस्य सुसम्पन्नां दशां कौतूहलाक्रान्तः समजनि, निज-भवन-समीपमेव भवनान्तरमेकं विलोक्य।

गोविन्ददासः—(समीपस्थ जनं प्रति) कस्येदं नवीनं भवनम्?

जनः—भवतामेवेदम्।

गोविन्ददास—साश्चर्यं पूर्वंभवनमगत्वैव यदा प्रथमं नव्यं भवनं प्राविशत् तदा तत्र शिशुमुत्सङ्गे वहन्तीं निजां पत्नीं शीलां विलोक्य कोपाकुलस्तामुपगम्य निर्भर्त्सयन् भणितवान्—बालोऽयं कस्य? कस्य भवने स्थीयते चाधुनेति?

शीला—(अञ्जलिं बध्वा) नाथ! श्रीमतामेवायं लोलालको बालकः। भवनमपि च भवतामेवाद्यापि। अतः 'त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्प्यते' इति गृह्यतामयं शिशुः।

गोविन्ददास—(हर्ष-विषाद-दशामनुभवन्) परं कथमेतद्भवितुमर्हति?

शीला—श्रूयतां, ननु सावशेषं मे वचः। तत्र दुग्धदानाय निशि या गोपालिका सामायाति स्म, साऽहमेवाऽऽसमिति।

गोविन्ददासः—किमत्र प्रमाणम् ?

शीला—भवतैव मह्यमर्पितं स्वनामाङ्कितमिदं स्वर्णांगुलीयकमेव। (इति सा निजकरशाखातोऽवतार्यांगुलीयकं निजस्वामिने तावदर्पयति)।

गोविन्ददासः—( निपुणं निरीक्ष्य ) अङ्गुलीयकमिदन्त्वस्ति ममैव परमेतत् किञ्चिद् द्रव्यं दत्त्वा तस्या गोप्याः सकाशादपि ग्रहीतुं शक्यते ? अतो नेदं यथार्थं प्रमाणं भवितुमर्हति। यदि च सा त्वमेवासीस्तदा तत्र जातं किमपि रहस्यवृत्तान्तमुपवर्णय।

शीला—यद्येवं तर्हि श्रूयतां श्रीमद्भिः—एवं एव इत्यादितः सर्वमश्रावयत्।

गोविन्ददासः इत्येवं स्वरहस्यवृत्तमाकर्ण्य समभूद् भृशं चकितः। सत्वरञ्च सद्गुरुसङ्गाद् बालकमादाय, शिरसि समाघ्राय च तं लालयन् हर्षप्रकर्षमाप्तवान्। अवकथच्च सत्यं त्वया यथा भणितमासीत् तथैवाऽद्य सर्वं निजमतिकौशलेन संपाद्य प्रदर्शितं साम्प्रतम्। पराजितोऽहमस्मि श्रीमत्या। नूनं भवती मतिमती नारी वर्तते। यतो हि—

धैर्योत्साहबलोपेता मतिवैभवभूषिता।
स्वाहशी रमणी धुवद् सर्वं कर्तुमिह प्रभुः॥



# किमासीत् ? किं संवृत्तम् ?

श्री निगमानन्दशास्त्री 'कविकान्त'

( श्रीसरस्वती स० विद्यालय 'खन्ना' पञ्जाब )

अस्त्येक काकपक्ष्या नद्यास्तटे 'खानपुरा' भिधानो ग्राम । अत्र प्राय. सर्वे शिक्षिता एव वसन्ति । अस्मिन् बालकानां कृते एक उर्दु-भाषाया स्कूलोऽप्यस्ति । अत्र मुन्शी नूरदीनः पाठयति । तत्र भवान् प्रकृत्यैव कोपन । भवन्तं दृष्ट्वा सर्वे बालका प्रकम्पन्ते । भावत्कं मधुर श्रुत्वा तु बालकाना पादयामे एव मूत्रप्रस्रवण भवति । सहृदयानां कर्णौ तृतीयज्वरेण पीडितौ भवत । यदा भवान् समर्थं वेत्र गृहीत्वा गच्छति, तदा तु सर्वेषां कर्णां हसन्ति । हृदयात् हठादेव हास्यमुद्गच्छति । लम्बायमाना दाढिका मधुमक्षिकागृहमविकलमनुकरोति । मुण्डित शिरो नपुसकस्य पाणिरिव चिक्कणायते । तमाखुपानस्याऽस्ति भवतो व्यसनम् । भवान् कतिवारम् अधिदिन धूम्रपान विदधाति । जनेष्वपि समुचितोऽस्ति समादरः । विवाहादिकृत्येषु प्रथममेव दृश्यते । सम्भवत पञ्चविंशतिर्बालका अपि भवत सविधे पठन्ति ।

एषु मध्येऽस्माक राजेन्द्रोऽपि पठति । यस्येदानीमस्माभि चर्चा क्रियते । अय साम्प्रत सप्तवर्षीयो बाल एवाऽस्ति । अस्य पिता पूर्वमेव स्वर्गारोहण कृतवान् । जननी चास्य लीलावती पत्युर्वियोगेनातिदु खिताऽस्ति । क्षणमपि तन्मूर्तिर्हृदयाद् नापयाति । राजेन्द्रस्य मुख दृष्ट्वा कथचिद् धैर्यं बध्नाति । अस्मिन् राजेन्द्रपितुरविकलां मूर्ति पश्यति । तद्दर्शनमात्रेणैव सत्पितु सम्पूर्णाऽकृति सम्मुखमागत्योपतिष्ठते । लीलावती राजेन्द्रस्य स्कूलाद् आगमनपर्यन्त वार वार वीथ्यां तमवलोकते । समागतञ्च त स्वाङ्कमारोप्य मुहुर्मुहुश्चुम्बति । पाणिपाद प्रक्षाल्य भोजनम् आदयति कुशलजातञ्च पृच्छति । राज ! अद्य त्वया किं पठितम् । तद् निजजननीं श्रावय । पर राजेन्द्र स्कूलात् नित्यं म्लानमुख एव समायाति । सर्वे बालका मम गाली वितरन्ति ताडयन्ति च माम् । स

वराकः प्रतिदिनं मातरं प्रतिपादयति, मातः ! ते मां ताडयन्ति त्वं तान् किमपि न कथयसि। इत्युक्त्वा रोदितुं प्रवृत्तः। एतदेव दोषावेदनं (शिकायत) राजेन्द्रः प्रत्यहं मातरम्प्रति करोतिस्म। परं माता लीलावती तं लालयति। वाष्पाकुललोचना च सान्त्वयति। वत्स ! मम राज !! अहमस्मि-एकाकिनी। ग्रामोऽयं विजातीयानाम्। यावदारभ्य ते पिता स्वर्गं गतः, तावदेव एते अधिकं द्रुह्यन्ति। कलहमेवेच्छन्ति। सदास्माकं धर्मे हस्तक्षेपं कुर्वन्ति। तूष्णीं भूत्वा दिनानि व्यतीयन्ताम्। वत्स ! राज !! सम्प्रति त्वमसि बालकः। एतादृशीर्वार्ता न जानीषे। इति चिन्तयन्ती 'मे शरीरमेवात्रकारणमिति' मत्वैव नूनं शोषयतिस्म शरीरम्।'

आषाढो मासः। दीर्घाणि दिनानि। मध्याह्नकाल, शीतलो वाति वायुः। मुन्शी नूरदीनः पार्श्ववर्तिनि गृहे तमाखुपानार्थं गतः। सुप्ताः सर्वे बालकाः। अस्माकं राजेन्द्रोऽपि सुप्तः। सुप्तेष्वेव तेषु मुन्शी नूरदीनः समागतः। सर्वान् कर्णौ ग्राहयित्वा वेत्रेणाऽवनमय्य, तद् (शिरः) जानुनोर्मध्ये कृत्वा, ततः पृष्ठभागमूर्ध्वमुत्थाय, उभयतोजानुनोरुपरिष्टात् उभाभ्यां हस्ताभ्यां कर्णौ अग्राहयत्। गच्छन्तु रे! उच्चैरुच्चैः पठन्तु। सर्वे बालकाः उच्चैः अलफ् 'बे पे-ते-टे' इति पठितुमारब्धाः। परं राजेन्द्रस्य अत्याऽद्भुत एव पाठः श्रूयते 'किमासीत् किं संवृत्तम्' इति। मुन्शीनूरदीनेन राजेन्द्रमाहूय पृष्टम्। राजेन्द्र ! कथय का वार्तास्ति ? राजेन्द्रः केवलं 'किमासीत्किं सवृत्तम्' इत्येवोत्तरं ददाति। इदमेव पठति 'किमासीत्किं सवृत्तम्' इति। भूयसि ताडनेऽपि राजेन्द्रस्तदेवैकमुत्तरं ददाति। कोपारुणनेत्रैः स न्यायालये प्रेषितः, न्यायाध्यक्षेण साम्ना सम्बोध्य पृष्टम्। वत्स ! कथय का वार्तास्ति ? राजेन्द्रः पूर्वोक्तमेवोत्तरयति। तत क्रुद्धेन न्यायाध्यक्षेण प्रधानन्यायालये सम्प्रेषितो राजेन्द्रः। तत्राप्येवमेव सर्वं समपद्यत। किं बहुना-सर्वैर्मिलित्वा स राजसमक्षं प्रहितः। तत्र च भूपतिना तं मत्तवरयानादिषु भ्रामयित्वा पुत्रनिर्विशेषं विविधानि वस्तूनि च तस्मै दत्त्वा एकान्ते पृष्टम्। ब्रूहि, वत्स ! का वार्तास्ति ? परं राजेन्द्रः प्रथममेवोत्तरमयच्छत्। किमासीत्किं सवृत्तम् इति, कुपितेन भूपतिना गाढान्धकारे निक्षिप्तः।

× × ×

गुर्जरदेशे प्रचण्डतापो, विघ्नसन्तप्तवर्गः, अगर्वेण गर्वेण गर्

प्रतापसिंहो नाम मेदनीपतिरासन। चक्रवर्तित्व चिकीर्षन् स्वदुहितर सहजस्नेहा कुमारी विमलामपृच्छत्—वत्से ! विमले !! नास्त्यद्य जगति कश्चिन्मे समानो राजा। स्वायत्तीकृत मया एतन्महीमण्डलम्। सम्प्रति दिग्विजय कर्तुमिच्छामि। वत्से ! अद्य श्वो वाऽहं गन्तास्मि। एतद् श्रुत्वा विमलाऽब्रवीत् पूज्यपित ! मन्ये तवाऽतुल प्रताप। वशवर्तिन सर्वे राजान। परम् अस्मिन् जगति महामहान्तो बुद्धिमन्त सन्ति। यस्य बुद्धिर्बल तस्येति। नाऽहमत्र भवन्त प्रतिबध्नामि। ममेयमिच्छास्ति यदह द्वे काष्ठपुत्तलिके ददामि। ते च सर्वेषु देशेषु प्रपणोये। तयोरुपरि एव लिख्यताम् 'कयोर्मनुष्ययोरिमे पुत्तलिके प्रतिकृतिभूते ? इति प्रश्नस्योत्तर मासान्तरे एव दत्त्वा प्रेषणीयम् अन्यथा समस्त स्व स्व राज्य मे चरणयोरर्पणीयम् ! यश्चोत्तर दास्यति-तस्मै अर्धराज्येन सार्धं स्वपुत्री दास्यामि' इति श्रुत्वा भूपति विमलाया बुद्धिमत्तां प्राशसत्, तथैव च कृतवान्। सर्वत्र प्रेषिते पुत्तलिके। अस्मिन् राज्येऽपि समागते ते पुत्तलिके। सर्वत्र अनयोरेव फलफल प्रासरत्। समासन्न सोऽवधि। सम्प्रति सर्वदा चिन्ताकुल एव भूपतिस्तिष्ठति, न कश्चिद् उत्तरयितुमपारयत्। कलकलोऽय राजेन्द्रकर्णमपि अस्पृशत्। राजेन्द्रेण द्रष्टुमिच्छा प्रकटीकृता। पर राजकर्मचारिभि सर्वमुपेक्षितम्। राजेन्द्रेण पुनरपि द्रष्टु सैव प्रार्थना कृता। अधुना तु कर्मचारिभिर्भूपतये विनिवेदितम्। देव ! स बालकोऽपि एते पुत्तलिके द्रष्टुमिच्छति योसौऽकारागारे निक्षिप्तोऽस्ति। भूपतिनाऽऽज्ञतम् यद् गच्छन्तु त बन्धनाद् मोचयित्वा समानयन्तु। समानीतो राजेन्द्र.। दृष्टे पुत्तलिके। सर्वेषा मुखानि पीतिमान प्रत्यपद्यन्त। राजेन्द्रेण कथितम्, द्वे सूचिके अपेक्षिते स्त। झटिति तद्वचनानुसार समपद्यत। समानीते सूचिके राजेन्द्राय च दत्ते। राजेन्द्रेण प्रथममेकस्या पुत्तलिकाया कर्णे सूचिका निक्षिप्ता, सा मुखेन निरगच्छत्। यदा द्वितीयस्या कर्णे सूचिका निक्षिप्ता सा हृदये एवावातिष्ठत। प्रथमाया उपरि लिखितम् 'इय पुत्तलिका महाराजगौडेन्द्रस्याऽस्ति, स हि कर्णेन श्रुत्वा मुखेन निस्सारयति।' 'इय द्वितीया पुत्तलिका महाराजमालवेन्द्रस्याऽस्ति, स हि कर्णेन श्रुत्वा मुखेन न प्रकाशयति, वृत्त हृदय एव गोपायति' इति। इदमुत्तर तत्रैव प्रेषितम्, यस्माद् आगतमासीत्। तेन च भूपतिना सर्वं प्रतिपन्नम्। अर्धराज्येन सार्धं स्वपुत्री विमला राजेन्द्राय दत्ता।

एतद् दृष्ट्वाऽमुनापि भूपतिना विचारितम् अहमस्मि अपुत्रः। यद्यस्मै स्वकन्यां विजयां दद्याम् तदाऽहमपि पुत्रवान् स्याम्। कोऽन्योऽस्मात् श्रेष्ठो वरः स्यात्। अनेन संरक्षिता सर्वेषां प्राणाः। अहमपि विजयामस्मै दत्त्वाऽनृणो भविष्यामि। अयमेव मेऽत्र राज्येऽभिषिक्तः स्यात्। इति निश्चित्य प्रातरेव शुभमुहूर्त्ते स्वकन्यां विजयां राजेन्द्राय प्रादात्।

अद्य विमला-विजया-समेतो राजेन्द्रो राजभवने विराजते। विमला तस्य पादौ संवाहयते। विजया तालपत्रेणोपवीजयति। अधुनैव राजेन्द्रेण सुल्तानूरदीन, न्यायाध्यक्ष, प्रधान-न्यायाध्यक्ष, अमात्यादयश्च सर्वे समाहूता। उक्तञ्च तेभ्यः, अयि मदीय! प्रजागण!! श्रूयतामधुना सा वार्त्ता। यदाऽहं स्कूले सुप्त तत्र मेऽय स्वप्न. समागत, यदहं सिंहासनमारूढोऽस्मि, विमला मे पादौ संवाहयते, विजया मामुपवीजयति, दृश्यताम् इयमेवाऽवस्थासीत् इति। यद्यहं तदैव एतदवक्ष्यम्-तदा तदैव मृत्युबन्धनमवाप्स्यम्। अतोऽहं अब्रवीमिस्म-'किमासीत्? किं सवृत्तम्?' इति॥



# अस्थाने नियोगः

श्री विश्वनाथमिश्र व्याकरणाचार्य.

( प्राध्यापकः डूंगरकोलेज, बीकानेर )

अस्तित्रिभुवनललामभूता धार्मिकभक्तभावितभूतेश्वराधिष्ठिता, विपुलसभारभासुरा भुक्तिमुक्तिदायिनी वाराणसीनामनगरी। तत्र दक्षिणेन वरुणाया अतिरमणीयं मूर्तिमद् धर्मस्वरूपैः पुण्येन कर्मणा सत्ययुगमिवाचरदभिः अजस्रं शास्त्रपारिशीलनपरिष्कृतशेमुषीकैः द्विजवरैरध्यासितं नातिह्रस्वं नानाविधकोष्ठप्रकोष्ठैरुपबृंहितकलेवरमासीत् किमपि देवस्थानम्। मध्येदेवालयन्तत्र विस्फारितभुजायमानशाख असंख्यकोटरव्याप्तपक्षिनिकरमुखरितदिगन्तरालो निदाघमध्याह्ननिषेवितच्छायो विशालो वटवृक्षः। आहारार्थं सुदूरमुड्डीय निषसन्ति यत्र रात्रौ विविधविहगा खादयन्ति च नैकविधानि भक्ष्याणि शावकैः। एवं कालमतिवाहतां तेषां समापतत् वर्षर्तुः।

एकदा निशीथे स्वस्वकोटरमधिशयानेषु खगकुले समचलत् प्रबलः प्रभञ्जनः। प्रचण्डदैत्यसैन्यवद् भीषणं गर्जन्तो बलाहका महीमेकार्णवां कर्त्तुमुद्यता मुसलधारं वर्षणमारेभिरे। परां काष्ठामुपगतेन तमसा निष्फलतामभजत् दर्शनम्। सर्वे च देवालयवासिनो द्विजा स्मारं स्मारं भगवन्तं स्वकीयप्रकोष्ठमेवाध्यवात्सुः। पक्षिणश्च शीतवशादुपेत्य कष्टं बहिः पलायिताः, मनागप्यवकाशमनवाप्य पुनः परावृत्ताः, भ्रान्त्या च कोटरान्तरमुपगता तत्रस्थैः पक्षिभिः फटफटायमानदन्तैर्भृशं दष्टाः, महान्तं कोलाहलं चक्रु। एवं कलहायमानेषु तेषु वायवीयाघातमासाद्य केचन अधः पतिताः, अपरे च गतासवो जाता, इतरे च वृक्षशाखावलम्बिता एव शब्दायमाना आसन्।

एवं रात्रौ संहारमुपगतेषु बहुषु खगेषु परेऽहनि सर्वैः पक्षिभिर्मिलित्वा आयोजितैका परिषद्। तत्र च वरेण्यो मतिमताम्, अग्रेसरो प्रज्ञाविदाम् भुशुण्डिरिवापरो नीतिशास्त्रविशारदः प्रवयाः दूरदर्शीनामा काकः सर्वसम्मत्या निर्वाचितोऽध्यक्षः। परमविनतो निखिलकार्याकलनपटीयान् सुबुद्धिनामा शुकश्चमन्त्रिपदमलञ्चकार। तस्यां परिषदि

पारितोऽय प्रस्तावो यत्-यद्यस्मासु नास्थास्यत् क्षोदीयसी स्वार्थभावना तदा कथकारमनेके वन्धवोऽकालमेवकालकवलिता अभविष्यन्। अत समुपेत्य तुच्छजातीयभावनामुद्भाव्य च नव्या हृद्या धारणा महतो महते सर्वजनसुखायभूयसे मङ्गलाय च यतनीयमस्माभि। तथेति प्रतिश्रुत्य व्यवहरता तेषा व्यतीयाय भूयान् काल ।

अनन्तर समृद्धज्ञानविभवोऽखिलप्रीतिभाजनं प्रसन्नचेताः दूरदर्शी प्रथितयशा सत्सुरभिसमाकृष्टैर्निकषालङ्कान्यग्रोधपादपमुपसेवमानैर्विहगकदम्बकैः सादर समाहूतो धर्मोपदेशदित्सया भाषमाणश्चैकस्मिन्नहनि प्रत्यपीपदत् यत् गगनतलमुपगतो भुवनभास्कर. कदाचित् प्रखरकिरणजाले ललाटन्तपतामापन्नोऽपि साय विगतकिरणमालो नष्टवसुरिव परमविपण्णोऽस्ताचलमुपैति । व्यवहारेणामुना विज्ञात भवति यत् ससारोऽय नैकरसः किन्तु प्रतिक्षण परिणामी वर्तते चायासकर'। अतो विमुक्तयेऽस्माद् यतनीय सर्वतोभावेन। अस्माक मनसि प्रवृत्तिः निवृत्तिश्चेति वृत्तिद्वयमनवरत कार्यं कुरुत। तत्र प्रवृत्त्या समुत्पन्नः कामक्रोधादिभिः पुष्टता गतो मोहः निवृत्तिद्वारा समुत्पन्नेन शान्तिश्रद्धाद्युपेतेन विवेकेन सह कलहायते। परन्तु विवेकस्य प्राबल्यमुपनिषदा सह तस्य सम्बन्धश्च प्रबोधनाय परमावश्यक । प्रबोधनमेव चास्माक जीवनस्य परोपनिषद्। अतो वर्द्धयिता पारस्परिककलहाना, जनयिता क्षुद्रवासनानां प्रवर्तयिता क्षोदीयसां कर्मणा सर्वथा त्याज्य. प्रवृत्ते पन्था । एवमाभाष्य विराममुपगते दूरदर्शिनि "धन्यो भवान्, मन्यामहे कौतुकिना, अग्रेसरेण तत्त्ववेत्तृणां शिवेन विहगकुलकल्याण चिकीर्षुणा धृतो नवावतार एव भवान्" इत्यादय साधुवादा समभूवन्। सत्कृतश्चदूरदर्शी निजालयमगात्। कर्णात् कर्णमधिरोहति सुवृत्तेऽस्मिन् गतानुगतिकतयाऽधिवाराणसि पक्षिणामनेके शिक्षालया समुद्घाटिता । यत्र च विविधानि लोक हितसाधकानि प्रवचनादीन्यभवन् ।

समतिक्राम्यति च भूयसि काले महता प्रयत्नेन समुचितोद्योगेन च सभ्ये जगति भाविनां खगकुलाना निरक्षरताविनाशकामनया सस्थापितो विशाल शिक्षालय । विशिष्टां वृत्ति भुञ्जानाश्चोपदेशकप्रवरास्तत्रोपस्थाय नियमेन मनोयोगेन परिष्कृतभावनया,शुद्धाचरणेन च सात्त्विकमुपदेक्ष्यन्ति । प्रस्ततोऽयसमाचारः सत्कृत समारतश्च मनीषिवर्गैः प्रपूरितश्च शिक्षालयस्पर्द्धिभि. प्रचलिताश्चोपदेशपरम्परा ।

तत्र ह्यासीदेकः क्षुद्रबुद्धिनामा स्वार्थसाधनपरायणः दोषैरहीनः सारस्वतलवलेशविहीनः परोत्कर्षासहिष्णुरपि विशिष्टं पदमुपगूहमानो दिवान्धः उलूकः। तेन मनस्यालोचितं-यदि केनाप्युपायेन ममचिरमित्रम् अधमाशय नामा गृध्रः शिक्षालयेऽत्र नियुज्येत तदा तस्यापि नीरसं दयनीयञ्च जीवनं शोभनं सम्पद्येत। स चेत् सुदूरे गृध्रकूटनाम्नि पर्वते कृतवसतिः जराक्रान्तः पदात् पदमपि गन्तुमशक्तो दैनिन्दनं स्वकीयाहारमप्युपार्जयितुमक्षमो महता कष्टेन कालं कलयति। युवा खल्वसौ पितृविहीनं मां निजोच्छिष्टाहारात् किञ्चित् किञ्चित् दत्वा जीवन्तीं दशामनयत्। अनीश्वरः खल्वहं तदीयमुपकारं विस्मर्तुम्। समुचितोऽयमवसरस्तदानयनस्यात्र।

एवं बहु विमृश्य तेन क्षुद्रबुद्धिना महतीं विडम्बनामारचय्यानीतोऽसावधमाशय। अनयैव दिशा क्षुद्रबुद्धेः प्राप्तपरिनया बहवो बकश्येनादयस्तत्राजग्मुः। अनवरतमेधमानमेवं क्षुद्रबुद्धिपक्षमालोक्य "वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह। न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि" इति नीतिविदां वचो विमृश्य साम्प्रतं भूरेषा वसितुमसाम्प्रतमिति निजविचारमात्मीयजनपुरस्तात् प्रकटय्य शान्तिपरायणो दूरदर्शी मलयशिखरमारुरोह। कतिपये पटवः खगास्तमनुजग्मुः। अदसीयपरममित्रं विनतं सुबुद्धिं विभिन्नकार्यातिपातात् समनुगन्तुं न शशाक।

इतश्च दूरदर्शिन एव स्थाने कृतवसतिः समानीतश्च क्षुद्रबुद्धिना अधमाशयः अल्पीयस्येव काले स्वकीयानुचिताचरणेन तत् पक्षिकुलमान्दोलयामास। प्रवचनसमये विवेकप्रतिकूलं मोहपक्षमादाय "निःसंगस्य पुरुषस्य विशिष्टा खलु शक्तिरविद्या सनः प्रसवभूमिप्रवृत्यात्मकं जगदिदमुत्पादयामास। इदमेवास्माकं सर्वस्वं निवृत्तिपथमुपदिशन्त्या विद्यया कवलीक्रियते। को नाम हितार्थी पिशाचिन्या विद्यया सयुज्यमन्दानन्दप्रदस्य जगतः कुर्यात् समुपेक्षणम्" इत्याद्यनर्गलं प्रत्यहं प्रतिपादयाम्बभूव।

एकदाऽसौ विपरीतमाचरन्तं सुबुद्धिमनुलक्ष्य सहचरान् प्रत्याह-अस्माकं मध्ये निवसन् दूरदर्शिनो वस्तुतोऽदूरं पश्यतोमन्त्री सुबुद्धिः विवेकपक्षमवलम्ब्य जनान् प्रबोधयति, प्रेरयति च सर्वान् तमेवपक्षमवलम्बयितुम्। महान् खलु प्रत्यवायोऽयं येनाप्युपायेन समाजादतो बहिष्कार्यः। एवमामन्त्र्य मिलिताः सर्वे मर्मन्तुदेन मिथ्याध्यारोपेण

विदूप्यासंस्येर्नखश्चपुटै पशुमार मारयित्वा नाममात्रेण जीवन्तं सुबुद्धिमपि पृथक् चक्रु । साम्प्रत विगतज्वरास्ते क्षुद्रबुद्धिप्रभृतय स्वच्छन्दमाचरन्त सर्वं सत्पथ कापथैर्विमर्दयन्त कदाचारैर्विहग कुलं शिक्षागारञ्च तेषा विलोपयाम्बभूवुः ।

गच्छता कालेन परा काष्ठामुपगते तदीयानाचारे क्षुब्धेन सभ्यवर्गेण तीव्रदण्डाघातेन कथावशेषता नीतोऽवभाशत क्षुद्रबुद्धिश्च स्वकीयजीवनपरिरक्षया सुदूर पलायित । विभिन्न शिक्षालय परिकुलञ्च । तस्मिन्नेव समये मलयशिखरमधितिष्ठन् दूरदर्शी स्वसहचरानब्रवीत्—

"अस्थाने नियोगो हि परिणामे भयावह"।



# कुण्ठा डाकिनी

श्री देवीदत्तशर्मा चतुर्वेदः

( विद्यानिधि , जयपुरम् )

मावलीपत्तनाधिपतिः श्रीरायकृष्णसिंहः स्वभावगभीरो विद्वाँश्चासीत्। मावलीपत्तनं हि परितो योजनद्वयमिते पर्वतप्रान्तदेशे वसतिरेका। प्रायशस्त्रिंशत्सहस्रमानवानामत्रासीन्निवासः। पत्तनाधिपतिना रायकृष्णसिंहेन वार्षिकआयरूपेण लक्षद्वयात्मकं धनमितः प्राप्यते। मध्ये पत्तनमस्याधिपतेर्विशालं सुमनोहरश्चास्त्येकः सौधः। सेवकानुसेवकैर्नानाविधवाहनैः, अश्वैः, गोमहिषीभिश्च परिवृतो रायकृष्णसिंहः समृद्धिमानासीत्। मावलीपत्तनं चैकतो हरितहरितेनोन्नतरेण पर्वतेन समावृतमन्यतश्च पर्वतं संस्पृशतैकेन महता सरसा सुशोभितं कामप्यनन्यकमनीयतां धत्त। सरश्चैतत् परितोऽपि योजनमितं विस्तृतं, फुल्लकमलयुतं नानाविधजलचरयुतं च। न केवलं मीनानामेवात्र सरसि निवासः प्रत्युत नक्रा अप्यत्र प्राप्यन्ते। मावलीपत्तनतः विंशतिक्रोशान्तराले वर्तमानस्य महाजनपदस्य धनिनो यदाकदा रायकृष्णसिंहस्याज्ञां संप्राप्य मृगयार्थमत्र समागच्छन्ति। पर्वतप्रान्तभागत्वात् सरसस्तटवर्तित्वाच्च सुप्रसिद्धिमाप स्थानमेतत्। प्रजाश्चात्रत्या रायकृष्णसिंहमनुरक्ता सुप्रसन्ना च। स्वयं कृष्णसिंहश्च प्रजाजनैरस्ति संतुष्टः।

सर्वतः समृद्धिमापन्ने रायमहोदयस्य जीवने एकैव रिक्तता आसीत्। पञ्चपञ्चाशद्वर्षदेशीयस्याप्यस्य नासीत् सन्ततिः। रायमहोदयस्य विवाहद्वयं संजातम्। पूर्वमहिषी तु विवाहाद्दशवर्षानन्तरं दिवंगता, नितान्तं सन्तानविरहितैव। ततश्च परिजनवर्गस्य हठप्रार्थनापरवशेन रायमहोदयेन द्वितीय उद्वाह आरचितः। एतद्विवाहानन्तरमपि यद्दुवर्षाण्यतीतानि। परं नाभवत्संततिलाभः। संततिप्राप्तये च यज्ञयागादिकं, देवपूजनम्, ग्रहयागः, तान्त्रिकमनुष्ठानमित्यादि नानाविध उपायः प्रचलति स्म। एको विद्वान् मैथिलस्तान्त्रिकः सदा-

नन्दिनी प्रत्यहं सौधस्यैवैकस्मिन् प्रकोष्ठे भगवतीं प्रतिष्ठापनाद्युपचारैः षोडशैः पूजयति स्म।

अथ देवतानां प्रसादः समजनि। राजमहिषी प्रासूतैकं सुन्दरं कुमारम्। एकवर्षं यावत् बालस्यास्य नानाविधरक्षणोपायान् साधयन् रायमहोदयो बालं संरक्षितवान्। जन्मकाले च अति सामान्यतयैव जन्मोत्सवः स्नान-सूर्यपूजादिभिरत्यावश्यककार्यजातैरेव समापूर्यत। नातिसमारोहेण कश्चन उत्सवप्रबन्धो विहितः। अत्रासीन्महत् कारणम्।

ग्रामे हि कुण्ठाख्या नितान्तं भयानकरूपैका वृद्धा प्रतिवसति। या हि सायं प्रातर्मध्याह्ने वा ग्रामे यत्र यत्र मलिनवेशधारिणी, मुक्तमूर्धजा, आरक्तनेत्रा, दन्तान्दर्शयन्ती यदृच्छया विचरन्ती विलोक्यते। तद्दर्शनसमकालमेव पुरवासिन्यः स्वीयान् बालकानङ्के निधायातित्वरया स्वगृहमाविशन्ति। स्वगृहं यदि दूरे स्यात् तर्हि समीपस्थस्य गृहस्थस्य कस्यापि गृहमाविशन्ति। कुण्ठा डाकिनी, कुण्ठा डाकिनीति किशोरकाणां रवेण तदानीं समपूर्यत ग्रामः।

श्रूयते हि कुण्ठाया विषये,—वैकुण्ठेति नामिका सैषा काचन राजपरिवारस्यैव योषिदासीत्। सप्तदशवर्षैव वयसा विधवा सञ्जाता। परलोकगतस्य भर्तुः, मासद्वयानन्तरमेवास्या एकः पुत्रः समजनि, इति पत्युर्विरहजं महच्छोकं दधानापीयं पुत्रलाभेनात्मानमुपलालयति स्म। बालं प्रेम्णा पोषयन्ती च कालं सुखेन यापितवती। शरीरकान्तिरस्या मनोहरा, वर्णो गौरः, सुन्दरीति वक्तुं युज्यते। राजपरिवारसदस्यत्वात्, अकाल एव च दुःखसागरे वैधव्यरूपे पतितत्वाच्चेयं सर्वस्यापि ग्रामवासिजनस्यासीद् दयापात्रम्। सर्वे एवास्यां सहानुभूतिं समादरं च दधते स्म। बालपोषणे दत्तचित्ताया अस्याः कथंचित् समभवत् कालक्षेपः। परं हन्त! दैवेन तदपि न सोढम्। शिशुरपि वर्षद्वयानन्तरमेव सहसा क्रूरेण कालेन कवलित इत्यहो दुःखगिरिरिवापतितः। शिशोर्मृत्युसमकालमेवैषा भ्रान्तचित्ता प्रमत्ताऽभवत्। मृतं शिशुं कराभ्यां धृत्वाऽट्टहासं विमुञ्चन्ती सैषा गृहात् पलायन्ती, ग्रामे विचरन्ती सम्भ्रान्तैर्ग्रामजनैः कथंकथमपि गृहीता। मृतः शिशुश्चाङ्कादस्या आच्छिद्यान्तर्भूमौ समाधिं नीतः। तत आरभ्यैवेयं भ्रान्ता, प्रमत्ता मुक्तमूर्धजा ग्रामे यत्र तत्र विचरन्ती प्रायशः पञ्चवर्षाणि ग्राम एव निर्वाहयति स्म। यस्मात् कस्माद् गृहाद् यदप्य-

शनादिकं प्राप्यते तदेव गृह्णाति। स्वीये राजपरिवारे न कदाचित् गच्छति, ततश्च किमप्यशनादिकं न कदापि स्वीकरोति। ग्रामवासिजनस्तु दयापरवश एनां भिक्षादानैः पोषयति। किशोरकाणां बालकबालिकानां च कृते सेयं क्रीडनकमभवत्। कुण्ठा कुण्ठेति समाह्वयन्त, तां हसन्ति, आक्रोशन्ति, धूलिक्षेपादिकं तां प्रति समाचरन्ति, इयं चताननुधावन्ती सर्वान् वो भक्षयिष्यामीत्युच्चैर्वदति स्म।

एकदा च श्रुतं कुण्ठा ग्रामात् क्वचिद् गतेति। तत् कोलाहलविरहितो ग्रामः शून्य इव प्रतीयते स्म। ततश्च श्रुतं क्वापि वनान्तरे कुण्ठा केनाप्यघोरिणा सिद्धेन सम्मिलिता, तस्य शिष्यत्वमापन्ना। तेन हि अघोरिणा सिद्धपुरुषेण विक्षिप्तताऽस्या अपनीता, कान्यपि वर्षाणि स्वपार्श्वे रक्षिता, तन्त्रादिसाधने शिक्षिता। विशेषतश्च श्रूयतेस्म, मृतशिशूनामामकलेवरसेवनक्रमं अनया विज्ञातं इति। अथ गतदशवर्षेभ्य इव पुनर्ग्रामे समागता। आगमन काले विलोक्यते स्म, भ्रान्तत्वमस्या नासीत्, परं सौन्दर्यमस्यास्तिरोऽभवत् गौरो वर्णश्च नष्टः, तत्स्थाने ताम्रवर्णः सञ्जातः। मलिनवेशधारिणी, मुक्तमूर्धजा चास्त्येवेति। सर्वथा मौनालम्बना ग्रामस्यैकदेशे वृक्षाधस्तात्तिष्ठन्तीयं ग्रामजनैः प्राप्ता। अथ तत्रैवैका पर्णकुटी निर्मापिता लोकैस्तत्रैवेयं निवासमकरोत्।

समतीतः कश्चन कालः। परं ग्रामे भयमेकमागतम्। अल्प वयस्काः शिशवः अकाल एव मृत्युमुपयान्तोऽधिकसंख्यायां दृष्टाः, ग्रामे घोष इव सञ्जातः, 'कुण्ठा डाकिनी' अस्ति। अनयैव शिशवो हन्यन्त इति। परं प्रत्यक्षतस्तु न किमपि विलोक्यते, केवलमेतदेव श्रुतं यत् अल्पवयस्कं कमपि शिशुं यदि कुण्ठा लोकयति, दर्शनानन्तरमेव स शिशू रक्ताभावमापन्नः क्रमशः क्षीयते, द्वित्रिदिनानन्तरं च पञ्चत्वमापद्यते। एतदेव कारणं यत् सुवासिन्यस्तां श्रुत्वैवागच्छन्तीं स्वकान् बालानङ्के कुर्वन्त्यो गृहमाविशन्तीति। अपवादभीतेन रायकृष्णसिंहपरिजनेनापि एकवर्षं यावत् तादृशः प्रबन्धो विहितः यत् सौधपार्श्वेऽपि कदाचित् कुण्ठा न समागच्छेदिति। ग्रामे शिशूनां बहु संख्यायां मरणं चावलोक्य कुमारस्य जन्मकाल उत्सवादिकं च नाऽकरोत्।

दिनद्वयानन्तरं कुमारस्य प्रथमवर्षपूर्त्तिरभिनववर्षप्रवेशश्च भविष्यति। इदानीं रायमहोदयस्य परिजनैर्गृहसदस्यैर्विशेषतश्च कुमारजनन्या श्रीरायमहोदयः प्रार्थितो यत्—जन्म महोत्सवः

कुमारस्य महता समारोहेण संपादनीयः। परमेश्वरकृपया चरमेऽस्मिन् षष्टिवर्षदेशीये वयसि कुमारोऽयमुपलब्धः। सर्वेषां व्यवहारिजनानामाह्वानेन, भोजन-पान विनोदादि-सत्कारेण च संमानयित्वा समादरणीयानामाशीर्वचोभिर्बालो राय अलङ्करणीय इति। मोलाम्र स्वीकृतोऽयं प्रस्तावो रायमहोदयेन। मन्त्रिणमाहूय मासावधिम्, उत्सवसंभारः संभृयतामिति। महानगरे टेलीफोनयन्त्रद्वारा सर्वे व्यवहारमात्रः प्रियजना आहूयन्तामिति च।

समारब्धो जन्मोत्सवसमारम्भसंगठनव्यापारः। सेवकाः कार्यनियुक्ता यत्र तत्र परिधावन्ति। अनेके सेवका सौधमार्जने संलग्नाः, केचन सौधपरिलेपने। सौधसीमान्तर्गत एकस्मिन् महत्महानसप्रकोष्ठे नगरादाहूताः पाचका विविधानि मिष्टान्नानि क्षारान्नानि च निर्मापयन्ति। नगरस्य प्रसिद्धा नर्तक्यो समाहूता। अनेके गायका नर्तका, गायिकाश्च समागता। तेषां, तासां चावासः सौधसीमान्तर्गतमहदुद्याने कार्पटिक गृहेषु (टेण्टेषु) विहितः। क्रमशो दिनद्वयं क्षणादिव व्यतीतं कार्यरतानां सौधभवनवासिजनानाम्।

अथ तत् शुभदिनम्। अपूर्वैव काचन शोभास्ति-अधरचनस्य सर्वोऽपि ग्रामः सम्यक् मार्जितः, प्रत्येकं रथ्यासु जलसेचनं कृतम्। जलपूर्णाः कुम्भा नैकवर्णरञ्जिता यत्र तत्रोच्चस्थलेषु निहिता सुशोभन्ते। ग्रामप्रवेशद्वारस्य सौधपर्यन्तं कदलीस्तम्भनिर्मितानि द्वाराण्यनेकानि निर्मितानि। सुधाधवलितस्य सौधस्य छविस्त्वन्यतमैव। एकवेशधारिणां सेवकानां स्व स्व कार्ये नियुक्तानामनुधावतां पङ्क्तिं विलोक्य रायमहोदयस्य परमप्रतापस्य कल्पना साकारतां धत्ते। सौधस्यैकस्मिन् महत्कोष्ठे महार्हसिंहासनासन्दीनां च व्यवस्था निहिता। उत्सवसंबन्धी जनसन्निवेशोपवेशनीयो भविष्यति। सौधद्वारे दुन्दुभिघोषस्तु प्रातःकालादेव समारब्धः। रायमहोदयस्य श्याल श्री नरेन्द्रसिंहः सपरिजनः समागतो भागिनेयजन्मोत्सवे। महार्हाणि चानेनानेकान्युपायनानि। एतत्तं भ्रात्रेनानेन यदा जन्ममहोत्सवस्य सुमहान् संभारोऽवलोकितस्तदा गृहसि तेन स्वभगिनी प्रोक्ता 'भगिनि! यदि पुनः राय महोदयस्याप्रचित्तजनकं न स्यात् तर्हि उत्सवस्यास्य व्ययभारो मयैव वोढुं शक्यते। मदीया तादृशीच्छा वर्तते-यदि भवती सहायपरा रायमहोदयमनुकूलयेदिति।

'अहं तथा यत्नपरा भवामि' त्युक्त्वा, गृहा सेवक आहूतः,

आज्ञाप्रश्च राय महोदयेन मिलनसूचनार्थम् । रायमहाशयपार्श्वगतेन राज्ञः सेवकेनोक्तं दर्शनमभिलषन्ती तत्र भवती भवत् समीपमुपसर्पतीति । श्रुत्वैव रायमहोदयेन निर्मक्षिकत्वं संपादितम् । अथ भ्रात्रा सह प्रविष्टया राज्ञोक्तम्-श्रुत भवता ममायं भ्राता किं चिकीर्षतीति ? नरेन्द्रः सविनयं कथितवान्, समादरणीय ! न किमप्यन्यत्, यदि भवतामापत्तिजनकं न स्यात् तर्हि जन्मोत्सवे निष्पाद्यमान सर्वोऽपि व्ययो ममैव भवेदिति। रायमहोदयेन सस्मितमुक्तम्, युक्त हि भागिनेय-जन्मोत्सवे भवतो व्ययकरणम्-मातुलो भवान्, न काचन हानिः। परमेवं क्रियताम्, यथा मम संमान रक्षितं भवेत्, भवतामिच्छापूर्तिश्च जायेत । अद्योत्सवे समागतानां प्राघुणिकानां पुरतो घोषणीयम्, यत्-उत्सवोऽय दिन द्वयं यावत् भविष्यति, अद्यास्मिन्नस्माकमेव व्ययो भवेत्, अग्रिमे दिने च भवताम् । श्रुत्वा नरेन्द्रः प्रसन्नः संजातः । तदनन्तरं प्रातरारभ्य एव नगरात् मरुत्तरयानानामागमनं प्रारब्धम् । सभ्रान्ता व्यवहारिणः समागच्छन्ति । कुमारमातुल श्री रायमहोदयश्च समागतानां सत्करणाय द्वारदेश एवावतिष्ठते । रायमहाशयेन प्राप्तागमनसत्काराः प्राघुणिकाः श्री नरेन्द्रसिंहेन प्रदर्शितमार्गा सुसज्जिते हर्म्यप्रकोष्ठे सम्प्राप्ता महार्हासनान्यलङ्कृतवन्तः । पर शतानि समागतानि मरुत्तरयानानि । ग्रामस्थाः सभ्रान्ता जनाश्च सहैव श्रीरायमहाशयेन आगन्तुकानां सत्कारकरणे दत्तचित्ता द्वारदेशे समुपस्थिता आसन् । मावलीपत्तनस्य पार्श्वभूतेभ्योऽनेकग्रामेभ्य. समागतैर्ग्रामवासिजनैः पत्तनमेतत् परिपूरितमिव, न कापि रिक्तं किमपि स्थान विलोक्यते।

अथाभिजिद्वेलायां संजात उत्सवारंभ । वैदिकैर्माङ्गलिकै रक्षापरैर्वेदमन्त्रैर्बालस्याभिषेको मार्जनरूपेण कृतः । तन्त्रविदुषा श्री सदानन्द झा महोदयेनानेकविधं तान्त्रिकमारक्षणं विहितं बालस्य । गणपतिपूजनादि मार्कण्डेयपूजन यावत् संपादित सर्वोऽपि शास्त्रविधिः । सुवासिन्यश्च यथाविधमारात्तिक्यं विहितवत्यः । प्राघुणिकैश्चानेकविधमहार्घोपायनप्रदानैराशीर्वचोभिश्च कुमार समलङ्कृतः । ततश्च विश्रामार्थं बालः प्रापितोऽन्त पुरे । समागतानां भोजनादिव्यवस्थायां श्री नरेन्द्रसिंहमहोदयेन तादृशो विहितः प्रबन्ध येन न कचित् कापि त्रुटिर्विलोक्यते। सुप्रसन्नः सर्वोऽपि समागत जनः । स्वग्रामवासिनामन्यग्रामेभ्य आगतानां च कृते राय

महाशयेन मन्त्री आज्ञप्त आसीत् यत् कश्चिदपि मम गृहागतः क्षुधितो न गच्छेदिति सर्वैः सेवकैस्तथा प्रबन्धो विहितो यत् सुखेन सर्वोऽपि जनो भोजनादिकं प्राप्तवान्। जयकारश्च रायमहाभागस्य ग्रामजनैर्बहुवारं विहितः।

भोजन समाप्त्यपराह्णकालः समभवत्। इदानीं नृत्य-गायनादि-विनोद आरब्ध। ग्रामवासिभिर्लोकगीतान्युपन्यस्तानि, विविधानां व्यायामकलानां प्रदर्शनं जातम्। ग्रामवासिभिः सामूहिकं नर्तन-मुपन्यस्तम्। तदेतत्सर्वं नागरिकाणां कृतेऽपि विनोदपरं जातमित्यहो ग्रामवासिनां कलाभिज्ञता। नगरादागताया गायिकाया शास्त्रीयं रागगायनं श्रुत्वा तु स्तब्ध इवाभवल्लोक। सुप्रसिद्धाया नर्तक्या नृत्यमवलोक्य तु सभाजन आत्मावस्थितिमेव विस्मृतवान्। विद्युद्वेग-सवेगाऽया नर्तक्याः पादक्षेपरीतिमवलोक्य तु चकित-चकितो लोकः साधु-साधुरिति बहुतरमुक्तवान्। अन्तःपुरेच सुवासिन्यो मङ्गल-गायनैः समघोषयन्। सर्वतः सुमहदानन्दस्यान्दोलनमिव संजातम्।

परं हन्त! मध्ये कोऽयं व्याघातः समुपस्थितः। कुण्ठा डाकिनी, कुण्ठा डाकिनीति रवेण परिव्याप्तमन्तःपुरम्। अस्मिन्नुत्सवविषये व्यापृतैः सेवकजनैः, मन्त्रिणा, स्वयं रायमहोदयेन वा कुण्ठा विषये न किमपि विचारितं न च कश्चन तादृशो दृढतरः प्रबन्ध एव तस्या अवरोधाय विहित इति प्राप्तावकाशा सा कुत्राप्युपलब्धेन चीनां-शुकेन मुखमाच्छाद्य, सौधे प्रविश्य, सुवासिनीभिस्तदा विलोकिता यदा सा दोलाधिगतस्य बालकस्य समीप एव तिष्ठन्ती साट्टहासं प्रोक्तवती, अहह कियान् सुन्दरोऽयं बालक इति।

सर्वासां पादेभ्यो भूमिः प्रस्खलितेव। कुण्ठेति ध्वनिश्रवणसम-कालमेव प्रस्खलन्ती कुमारजननी सत्वरं बालस्य दोलासमीप आगत-वती दोलासमीपे तीष्ठन्तीमेनामद्राक्षीत्। सदानन्दझा महोदय-श्चान्तः पुर एव तदानीमासीत्, स श्रुत्वैव कुण्ठेति ध्वनिं सत्वरं सदसि यत्र विराजते रायमहोदय तत्समीपे गत्वा कर्णेऽकथयत् महाराज! अनर्थः संजातः, भवद्भिः सत्वरमन्तः पुरे गन्तव्यमिति। राय कृष्णसिंहः सहसोदतिष्ठत्-अन्तःपुराभिमुखं च प्राचलन्, मध्ये सदानन्दः पृष्ट, किं जातमिति। तेनोक्तम् चीनां-शुकेन मुखमाच्छाद्य कुण्ठाऽन्तः पुरे प्रविष्टा, बालकस्य दोलासमीपे बालकं लोकयन्ती तिष्ठति,।

श्रुतिसमकालमेव रायमहोदयस्य हृदये प्रहार इवाभवत्-कण्ठश्चास्य शुष्कतां गत । अथ कथं कथमपि प्रयासेन रायमहोदय आत्मानं दृढीकृत्यान्तःपुरे प्रविष्टः। सुचतुरेण तेनैकस्यां स्थाल्यां मिष्टान्नफलादिकं संस्थाप्य हस्ते गृहीतम्। कुण्ठायाः समीपे गत्वा च सादरं प्रोक्तवान्, देवि! अहोभाग्यं मदीयं यदत्रभवती समागतवती। गृह्यतामेतन्मिष्टान्नं फलानि च। शुभाशीर्वचोभिश्च बाल एष संभावनीयः। 'आम्, आम्, किमिति नहीति' उक्त्वा गृहीतं तया मिष्टान्नादिकं शनैः शनैश्च सौधाद्विनिर्गता।

परं किमेतत्। बालकस्य मुखं परिम्लानं, शरीराच्चालिमा गच्छतीव, श्वेतिमा च तत्स्थाने प्रसृतवती। तत्कालमाहूतो वैद्यः। प्राधुणिकेषु चैको डाक्टरः सिविलसर्जनोपाधिधारी समार्धन समाहूतो बालकस्य रोगनिदानार्थं सयन्त्रो दत्तचित्तः समजायत। परीक्ष्य तेनोक्तं रोगस्तु न कश्चन प्रतीयते परं रक्तलोपः शरीरात् कथमभवदिति न निश्चीयते। अस्तु, 'इन्जेक्शन' ददामि, तेन भवेत् कश्चन लाभ इति। वैद्य महोदयश्च नाडीपरीक्षानन्तरमुक्तवान्-नास्त्येव कश्चन रोगः, परं क्रमशः क्षीयतेऽयं बाल इति। तान्त्रिकैः सदानन्द-झा महोदयैश्च विहितोऽनेकविधः तान्त्रिको रक्षणोपायः, परं क्रमक्रमशो मृत्युमुपसर्पतो बालकस्य रक्षायै समर्थो नाभवत्।

मावलीपत्तनं हि तदानीं दुःखसमुद्रे मग्नमिव शून्यं प्रतीयतेस्म, राजसौधे हि—बालकस्य जननी इदानीमपि मूर्च्छितैवास्ते। वैद्यडाक्टरसहयोगेनोपचारश्च क्रियते मूर्च्छा व्यपनोदाय, डाक्टरमहोदयेनोक्तं च प्रातरस्य मूर्च्छाहानिर्भविष्यतीति। सौधस्यैकस्मिन् प्रकोष्ठे रायमहाशयः शोकसंविग्नो निषण्ण। तत्पार्श्वासने च नरेन्द्रसिंह, मन्त्री, श्री सदानन्द झा महोदयश्च योऽहि रायमहोदयेऽत्यन्तं कृतस्नेहः। चत्वारोऽपि जना शोकसंविग्ना मौना अधोमुखाश्चोपविष्टाः। नरेन्द्रसिंहमहोदयेनोक्तम्—माननीय आउत्त, किमेतदभवत, क्षणैरेव कतिपयैः सर्वा परिस्थितिरन्यामेव दुःखतरां दशां प्रापिता। बुद्धिस्तु ममेदानीमपि घटनामिमां न स्वीकरोति यत् कस्यापि योषितो दर्शनमात्रेण बालस्य मृत्युरभवदिति। मम मनसि तु वर्तते महान् क्रोधः, यदि तत्र भवतामापत्तिर्न स्यात्तर्हि डाकिनीमिमां कुण्ठां सपदि गत्वा हन्यामिति। नन्वेतादृश्या बालघातिन्या वधे नास्ति दोषः।

सनिःश्वासं रायमहाशयेनोक्तम्, मित्र! यदि तस्या मारणेन

मृतकुमारस्य जीवनं पुनर्भवेत्तदा तु साम्प्रतं तस्या समुचितमिदानीमेव सा हन्तव्या, परं निरर्थकं तस्या वधेन को लाभ ? किमस्ति प्रमाणम् भवत्समीपे यत्तवैव बालोऽत्र हृत इति।

सदानन्द झा महोदयं प्रति रामभट्टाचार्येणोक्तम् . ननु विद्वन्! कुतूहलपरवशेन मया जिज्ञास्यते यदिदानीं सा कृष्णा किं करिष्यति, बालस्य मृत्युरेव वेदनावर्तैव तस्याः कार्यं सम्पन्नमुत कर्तव्यशेषमस्याः कल्पनावशिष्यत इति।

सदानन्द —अस्मिन् विषये यद्यपि तु न जानामि, यत् किमपि श्रुतं तन्निवेदयामि। बालस्य मरणमात्रेण तस्या इष्टं पूर्णमिति तु न वक्तुमुचितम्, यतोहि बालस्य मरणमात्रेण तया किमपि नोपलब्धम्, अद्यारभ्य त्रिरात्रपर्यन्तकाले मध्यरात्रे सैषा श्मशाने गमिष्यति, बालस्य शवं गर्तान्निष्कास्य सिद्धैर्मन्त्रप्रयोगैर्बालं पुनरुज्जीवयिष्यति। ततश्चास्य कलेवरं तु मन्त्रैः पुनः भावयिष्यति निजाज्ञापालनयोग्यं सम्पाद्य पुनः सङ्कल्प्य तस्य रक्तपानं करिष्यति, एतावत् पर्यन्तमस्ति तस्याः कार्यमेव।

श्रुत्वा सविस्मयं रामभट्टाचार्यः कथितवान्—यादृशी भगवत इच्छेति। परं गूढेन केनापि विचारेण रामभट्टाचार्यस्य नेत्रयोः प्रकाशरेखा काचन आगता, नोपलक्षिता केनापि। तेन हि स्वीयो विश्वस्तः सेवकः श्याम समाहूतः। तं रहसि कर्णे किमपि कथयित्वा स्पष्टमुक्तवान्—'श्याम! यद्येतत् कार्यं सम्पत्स्यते चेत् पारितोषिकप्रदानेन तव तथा पूर्तिं करिष्ये यथा जीवने तव न्यूनता कापि न भविष्यति। सर्वमप्येतत्तव साहसिके कर्मण्यवलम्बते।' श्याम सविनयमभ्युक्तवान्—स्वामिन्, पारितोषिकलोभो नावश्यकः। न केवलं मयैवापितु मत्पूर्वजैरपि तत्रभवतामन्नपानाभ्यामात्मा सम्पूरितः। मदीयधमनीषु भवदन्नप्रभवो रक्तः प्रसरति, तद्वान्यदपि स्वामिन् नैव कर्तव्येति।' 'अस्तु, गच्छ, सावधान, भगवान् तव साहाय्यं करोतु'-इति समादिष्टः श्यामो निष्क्रान्तः।

मध्यरात्रे घोरनिशायां सहायकेनैकेन सह श्मशानं प्राप्तः श्याम। यावद्दृष्टवान् पूर्वं यत्र मृतशिशोः कृते गर्तो निर्मित आसीत्तत्रैव गत्वा श्यामः सहचरमेकस्मिन् पार्श्वस्थिते वृक्षे समारोढुमादिष्टवान्, स्वयं चापरं वृक्षं आरुह्य तूष्णीमुपाविशत्। स्वभावभयंकरेयं श्मशानभूमिरिदानीं घोरनिशायां सर्वत सन्नद्धैव घोरतरा

प्रतीयते। रायमहोदयेनोक्तमासीत्, अद्य कस्यापि घटनाया सम्भावना नास्ति, श्वः परश्वो वा किमपि भविष्यति। परं नोपेक्षणीयः कालः, त्वयाद्यारभ्यैव त्रिरात्रं यावत् श्मशानो रक्षणीय इति। तत्तस्य कथनं महाशयस्य सत्यमेवासीत्, अद्य नक्तं न कश्चित् श्मशानं आगतः। उषःकाले वृक्षादवतीर्य सह सहचरेण श्यामो ग्राम आगतः।

प्रातःकाले राज्ञ्याः मूर्च्छा तु निवृत्ता, परं चैतन्यमाप्तया तया विलपनपुरःसरं रोदनमेवाङ्गीकृतम्। अशनपानादिकमावश्यकमपि तया परित्यक्तम्। तद्दुःखदुःखितो ग्रामवासी महिलावर्गश्च सौधे समागतः, प्रसृतोऽयं महारोदनध्वनिः। परमदुःखसम्मिश्रेऽस्मिन् समये नरेन्द्रः सखाप्पं स्वगतमवादीत्—'हन्त! मया विचारितमासीत् जन्मोत्सवोऽयं द्वितीये दिने मां पुरस्कृत्य प्रचलिष्यतीति, को जानीते अद्य वयं रोदनपरा भविष्यामः'। रायमहोदयस्तु नितरां गभीरः स्वप्रकोष्ठ एवोपविशति, न बहिरागतः, न च कश्चन सेवक एव तेनाहूतः। अशनपानस्य तु कथैव का आवश्यकविनिवर्तनादिकमपि तेन न सम्पादितम्। दिवा कालेऽनेके सम्भ्रान्ता ग्रामवासिनः समागताः, परं केनापि स न मिलितो नालपितश्च।

व्यतीतः कथमपि दिवसकालः। समागता सान्ध्यवेला। गतदिनमिवाद्यापि शून्यस्तब्ध इव संलक्ष्यते ग्रामवासिजनः। सर्वे परस्परं विलोकयन्ति तु परं न कश्चित् केनाप्यालपति। सन्ध्या कालोऽप्येष च सर्वेषां शान्तिदायकः पत्तनवासिनां शान्तिसम्पादको नाभवत्। पत्तनाधिपतेर्दुःखेन सहोद्विग्ना जना स्वे स्वे कर्मस्वद्य न रमन्ते। शोकसंमूढा इव सर्वेऽवातिष्ठन्त।

अथ प्रवृत्ता रजनी। श्यामस्तु गतदिनवत् सहचरेण सह श्मशानाभिमुखोऽभवत्। उभावपि सतर्कौ वृक्षयोरारुह्य निःशब्दाववातिष्ठताम्। क्रमशो व्यतीतः कालः, समागता घोरा निशा। कदाचिज्झिल्लीरवेण कदाचिच्च गोमायुशब्देन श्मशानशान्तिरियं व्याहन्यतेऽन्यथा सर्वतः सुस्तब्धं शून्यं घोरतरं प्रतीयते। प्रायशो द्वादशवादनकाले ग्रामात्श्मशानाभिमुखी निःशब्दं छाया ह्येका समुपासर्पत्। क्रमक्रमशः सावधानतया आगच्छन्ती सा बालस्य समाधेः समीपं अतिष्ठत्। वृक्षोपरिस्थितेन श्यामेनाधोविलोकयता ज्ञातम्, समीपस्थाया अर्धसमितायाश्चिताया अल्पः प्रकाशोऽपि तस्य सहायकोऽभवत्। तेन मुक्तमूर्धजा कुण्ठा विलोकिता, तस्या हस्तगतां कांस्यस्थालीं चापश्यत्। स्थाली-

पात्र तया भूमौ स्थापितम्। सहानीतया लौहकुद्दालिकया सा बालस्य समाधिस्थल खनितवती। बालकस्य शवश्च तया बहिरानीत। तत् शरीरलग्ना मृत् वस्त्रेण सम्प्रोञ्छ्य, स्थान चावमार्ज्य शवो भूमौ स्थापित। सहानीतेन सिन्दूरेण स्थाल्या चक्ररूपेण यन्त्र किमपि लिखितम्। शावरश्च दुर्गर्भिताना केषामपि मन्त्राणामुच्चारण सशब्द-मुच्चै कुर्वत्या तया शवस्य मार्जन विहितम्। अथ जीवनमाप्तो बाल शनैररोदीत्। साट्टहासमुक्तवती, तिष्ठ रे तिष्ठ, इदानीमेव त्वां तथा शाययिष्यामि यथा न कदापि पुना रोदिष्यसीति। बालस्य रोदनश्रवण-समकालमेव श्याम शनैर्निःशब्द वृक्षादवतीर्ण पदशब्दमकुर्वन् कुण्ठाया पृष्ठदेशे तयानवलोकित सम्प्राप्त, सहचरश्च तथा। कुण्ठा तु स्वपार्श्वस्थानात् तीव्रधारा छुरिका निष्कास्य, मन्त्रान् प्रोच्चरन्ती बाले दत्तावधानाऽसीत्। ततश्च सतुलिताभ्यां हस्ताभ्यां श्यामेन स्वोपवस्त्र कुण्ठाया पृष्ठतस्तथा निक्षिप्त यथा मुखमस्या सम्यगा-बद्धम्। सहचरस्तु बाल रुदन्तमङ्के कृत्वा ग्रामाभिमुख प्राचलत्। रक्षक भक्षकयो प्रतीतिमपन्नो बालश्च तदङ्क आश्वस्तो जात। केशपक्षे परामृष्टा कुण्ठा श्यामेन बलात् कुर्वन्ती ग्राम नीता, अन्येषा सहचर-सेवकाना हस्ते दत्ता। अन्य सहचरस्तु बालमङ्के कृत्वा द्वारदेशे श्याम प्रतीक्षमाण आसीदिति तद्धस्ताद्बाल सगृह्य श्यामोऽन्त पुरे गत। उच्चैरुक्तवान्, मात ? देवि ! गृहाणैन मम प्रियतम भ्रातर मिति। राज्ञी तु विस्मिता सबाष्पगद्गद वत्स, वत्सेत्युच्चारयन्ती बाल सगृह्यालिङ्गितवती। हर्षपरिपूर्ण स्वाश्रुजलैश्च बालस्याभिषेचन कृतवती परमानन्द प्राप्ता।

रात्रेरयमुत्तर काल, ग्रामे कोलाहल सजात। अनेके जना सौध द्वारे सम्प्राप्ता कुण्ठां तथा निगडिता विलोक्य क्रोधाविष्टा लोष्ठैर्मुष्टि पातैश्च तस्या वधमकुर्वन्। श्री रायमहोदयेन तु श्यामो बाहुभ्यां गृहीत्वा समालिङ्गित। उक्त च तेन मित्र ! भ्राताऽपि तथा न कर्तुं शक्नोति यथा त्वया मे कार्यं सम्पादितम्। अस्मिन् जन्मनि त्वत्तोऽह ऋणनिर्मुक्तो न भविष्यामि।

समाप्ता कुण्ठा डाकिनी। पत्तन हि अमङ्गलरहित जातम्। सर्वत सुप्रसन्नो जन।

सर्वे परस्परमुच्यते—अहो रायमहोदयस्य गाम्भीर्यम्, अहो तस्य नीतिनिष्णातत्वम्।

# अपाला आत्रेयी

श्री बलदेवोपाध्याय

( सुप्रसिद्धो विद्वान् ग्रन्थकारश्च, वाराणसेयसंस्कृतविश्वविद्यालये अनुसन्धानविभागाध्यक्ष )

अहमस्मि अपालाभिधाना दुहिता महर्षेरत्रेः। मम पित्रोरासीन्महत्यभिलाषा यत्तयोः शून्य सदनं सन्तति लाभः सनाथं कुर्यादिति। समस्त सद्म विषादस्य गभीररेखयाक्रान्तमासीत्। जातायां मयि तदाश्रमे प्रवाहिताऽभूत प्रसन्नतास्रोतस्विनी। प्रज्वलितो बभूव हर्षप्रदीपः येन प्रतिकोण प्रकाशेनोद्भासितमभवत्। व्यतीतं मे शैशवं मुनिबालकैः सह। बाल्ये प्रविष्टायां मयि पितृदेवस्य चेतश्चिन्ताकुलमभवद् यदा तेन मम शोभने शरीरे श्वित्रस्य दृष्टा लघुबिन्दव। हा, रमणीयं हि रूपमेभि श्वित्रविन्दुभिः सर्वथा लाञ्छित जातम्! पित्रा बिन्दूनेतानपनेतु यथाशक्ति कृतो निर्वच श्रम। विहितश्च कुशलभिषजामनुलेपनैर्लेप। फलं तु नितरां विपरीतमभूत्। औषधप्रयोगेण सहैव प्रतिकूलानुपातेन मे व्याधिरेधमान आसीत्। लघु बिन्दवो महच्चिन्हे परिणता इव नयनगोचरा सञ्जाता। अन्ततः परित्यक्तो मम तातपादेनौषधप्रयोगः।

मामकीन बाह्य वपुर्निर्मलीकर्तुमक्षमः पितृदेवो मम शिक्षादीक्षयोः स्वदृष्टिपात कृतवान्। सस्नेह मम पाठनमारब्धवान्। आश्रमस्य पवित्र वायुमण्डलम्, मुनिबालकानां निश्छल सहवासः, पितुर्लोकोत्तराऽध्यापनकुशलता, इत्येतानि सर्वाणि मिलित्वा ममाध्ययने कृतवन्ति प्रभूत साहाय्यम्।

अभूत् केवल विद्याग्रहणमेव मम जीवनव्रतम्। मया शन शनैः समधीताः साङ्गा वेदा। प्रसृतो मन्मुखात् सप्तसिन्धुमण्डलस्य पवित्रतमायाः सरस्वत्या विमल प्रवाह इव देवगिरो विशुद्ध प्रवाहः। सुकोमलबालिकाया पिकविनिन्दतकण्ठप्रदेशाद्यदा वेदमन्त्राणां ध्वनिमुखरितस्तदा कोकिलरवः कर्कशतां गतः, केकि केका भेकीस्वर इव

विरसतामुपगता । मम शास्त्रचिन्तनमाकर्ण्य मदीयगम्भीरवैदुष्येण परिचित सन् विस्मितः सञ्जात तपोवनजनः ।

समुदितं शनैः शनैस्तदाश्रमे वसन्तस्य मांगलिकं प्रभातम् । हरिता कुसुमभरभरिता लताः सानन्दमान्दोलिताः सत्य- सहकारतरूमाश्रित्य सनाथाः जीवनं कृत्यकृत्य मन्यमानाश्च बभूवुः । तदानीमेवाभून्मम जीवनेऽपि यौवनस्योदय । निरस्त बाल्यप्रयुक्तं चापल्यम् । न्यस्तं तत्र पदं गाम्भीर्येण । मदीयं शारीरिकपरिवर्तनमिद समवलोक्य मदर्थमनुकूलगुणशालिपात्रान्वेषणपरा बभूवुस्तातपादाः । नाऽभूदनुरूपवरान्वेषणे विलम्बः । आरब्धो यथावसरं मे विवाहोपक्रमः ।

आश्रमस्यैक आम्रनिकुञ्जो निर्वाचितो वैवाहिकविधेरनुष्ठानाय । निर्मिता वेदी । प्रवृत्तं यथाविधि ऋत्विग्भिर्हविर्जवतिलयोः । होमगन्धेनाश्रमस्य वायुमण्डलमेकामद्भुतां पवित्रतामनुभवदासीत् । तस्मिन्नेव लतागृहे दृष्टो मया प्रथमं पतिदेव —सुघटितगात्रः उन्नतभालो ललितत्रिपुण्ड्र. साक्षान्मूर्तिविनयस्य, मनोरमागारो विद्यायाः । तस्य प्रथमप्रथमदर्शने हि मयाऽवबुद्धो लज्जान्वितान्तरः । व्रीडाकुला मे दृष्टिर्नीचैरानमिता, किन्तु स्त्रीत्वस्य मर्यादामभिरक्षितुं मल्ललाटमद्यापि उत्थितमेवासीत् । आसीत्तस्य लज्जितनयनयोर्यौवनसुलभकौतुकभावमिलिता गाम्भीर्यमुद्रा । उपस्थितमुनिमण्डलसमक्षमग्निं साक्षित्वेन प्रमाणीकृत्य तेन सह सम्पादितो मत्पाणिग्रहणोत्सवः पितृदेवेन ।

सम्यक् स्मर्यते मया यदग्निप्रदक्षिणावसरे औत्सुक्यवशात्तस्योत्तरीयं वसनं किञ्चित् स्खलितम् । मम च केश-कलापे गुम्फिता यूथिकामाला शिथिलबन्धना भूत्वा धराचुम्बिनी जाता ।

नासीन्मत्कृते पतिगृहेऽपि कश्चित् प्रतिबन्धः । प्राप्ता मया पितृभवनसमा स्वातंत्र्य-शान्तिरत्रापि विराजमाना । श्वश्रूश्वसुरयोः सपर्यायामेव मम जीवनधारा कृतार्थतातटीमाश्रित्य चारुतया प्रवाहिताऽभूत् । किन्तु अस्थलकमले कण्टकमिवास्मिन् सुखमये स्वतंत्रे जीवने वस्त्वेकं हृदये शूलमभूत्, तत्रासीन्मम देहे जाज्वल्यमानं श्वित्रचिह्नम् । प्रिय कृशाश्वो मयि प्रकाममप्रीयत । किन्तु शनैः शनैरेभि श्वित्रलक्षणैस्तस्यान्तःकरणे मां प्रत्युत्पादितः श्यामाङ्कः । स ह्युदासीनाकृतिः सन् वैराग्ये निमग्न इव प्रतीतः । दूरंगता आश्रमस्य चेतनता । आसीत् सर्वत्र विराजमाना जडतायाः कृष्णा जवनिका बहिराश्रमद्रुमेष्वन्तः कृशाश्वस्य

चेतसि च। बहूनि दिनानि यावन्मया विषपानमिवापीतोऽयमुपेक्षा-भावः। किन्तु भवति काचित्सीमा सहिष्णुतायाः। तदेयं तिरस्कृतिस्तां सूक्ष्मरेखामतिक्रान्तवती या मित्रतोदासीनयोर्भावात् पृथक् करोति, तदाऽहं शिथिलसहनशक्तिरभवम्। मम सहनशक्ति श्लथबन्धना सजाता, ममान्तर्वर्तिनी जीवन्ती नारीत्वमर्यादा व्यापारेणानेन विक्षुब्धाऽभूत्, अपालाया अन्तस्तले निहितं भारतीयललनायाः स्त्रीत्वं स्ववैशिष्ट्य प्रकटयितुं पादमर्दिता फूत्कारविधायिनी भुजङ्गीव स्व भीमं रूपं दर्शयितुमाकुलमभूत्। उग्रमिदं रूपमवलोक्य कुशाश्व सकृत् त्रासेन कम्पितो जातः।

'भगवन्! कियत्कालं यावदहं भवत इममुपेक्षाभावं स्ववक्षसि वहिष्यामि ?' एकदाऽऽवेशाकुलाऽहमपृच्छम्।

"ममानादरभावः" ?—चकितः कुशाश्वोऽवदत्।

आम्। प्रेमोन्मादेन इदानीं यावन्नोपलक्षितो मयाऽस्यनिगूढोदासी-न्यस्य भावः। स्नेहचक्षुर्भि सर्ववस्तुष्वेका मोहिनी सरसतैव दृष्टा, किन्तु शनै शनै परिणतौ प्रेम्ण बाह्याडम्बरस्य स्वयमेव जाते न्यूनत्वे भवच्चरित्रेऽनुभूयते मया स्पष्टमुपेक्षायाः श्यामत्वरेखा।

'अस्य परिवर्तनस्य रहस्यं मम त्वग्दोषेऽन्तर्हितं किम् ?' अहम-पृच्छम्। स्वीकृतिं सूचयता कुशाश्वेन क्लेशयुतै शब्दै रेवंवक्तुमारब्धम् 'मम मानसे वासनास्नेहयोस्तुमुलं युद्धं प्रवृद्धं प्रवर्तते, प्रेम कथयति 'स्वजीवनं स्नेह-वेदिकायां समर्पयन्ती ब्रह्मवादिन्यपाला दिव्या योपि-दस्ति' किन्तु रूपवासना वक्ति त्वग्दोषेणास्या शरीरमेतावल्लाञ्छित यन्नेत्रेषु रूपवैराग्यमुत्पादयितु प्रमुखसाधनमभूत। न विद्यते तत्र रूपस्य माधुरी, लावण्यस्य चाकचिक्यं च। अन्यथास्ति कायो विद्रूपताया महानागारः, सुन्दरताया विशाला विश्रान्ति। अद्यावध्युपेक्षितं मया वासनावच। श्रुतं च सर्वं स्नेहकथितम्। किन्तु द्वन्द्वयुद्धेनानेन मे हृदय-मेतावद् विदीर्यते यत् सूक्ष्मवस्त्रावृतव्रणमिवास्य वैरूप्यस्य दीर्घ-कालं यावद् गोपनमसंभवं प्रतीयते।' कुशाश्वस्यैतानि न्यायरहितानि वचांसि श्रुत्वा हृदयं मे प्रज्वलितमिव सञ्जातम्। बाणविद्धभीषणके-सरिण्या गर्जनमिव मन्युखान् क्रुद्धवचसां प्रवाह स्वत एव प्रवहि-तोऽभूत्—

'पुरुषदृष्टौ स्त्रीजातेरियती तिरस्कृतिः ? प्रेम्णो वेदिकायां सर्वस्वं

समर्पयन्त्या नार्या एतावती धर्षणा ? कामनाकलुषितपुरुरूपेणेत्थं मर्दन न,र्या हृदयसुमनसः ? अन्याय्यम्! महदन्याय्यम्। भगवन्! स्त्रीजातेर्भावप्रवण सात्त्विकभावसुरभितं विमल हृदयं कदाऽवगमिष्यति पुरुषजातिः ? कदा विधास्यत्यादरम् ? नारीजीवन हि स्वार्थत्यागपराकाष्ठायाः समुज्ज्वल निदर्शनम्। स्त्रिया हृदय कोमलकरुणायाः, विशुद्धमैत्री पारमितायाः भव्यो निधि । चिन्ताविषादयोः दु ख तिरस्कारयोर्वा विपुलराशिमुरस्युद्वहन्ती नारीजातिः स्वक्षुद्रस्वार्थसिद्धये न कदापि पुरोगामिनी भवति। किन्तु पुरुषाणां कृत्यं कैर्वचोभिर्वाच्यं भवेत् ? रूपलुब्धास्ते बहिराडम्बरानुरागिण क्षणभङ्गुर चाकचिक्यस्याभिलाषिणो भूत्वा योषितः सुकोमलमपि हृदयं तिरस्कुर्वन्ति। न विद्धाम्यात्मश्लाघाम्, किन्तु समधीता मया साङ्गा वेदाः। प्राप्तो गुरुप्रसादात् सरसकाव्यमाधुर्यस्यास्वादनावसरः, अस्ति अपालासम समुन्नतबुद्धे सरसहृदयस्य च मणिकाञ्चनसंयोग सर्वथा विरल । किन्तु दैवस्योपहासः ? केवलमेक गुणं विना भवति ममेदृशी दुरवस्था। सुधांशोर्विपुले गुणसन्निपाते निमज्जति कलङ्ककार्ष्ण्यम्, परन्तु न निमज्जत्यपालाया विशाले गुणराशौ श्विग्रस्य श्वेतचिह्नम्।' एव निगदन्त्या मम रोषारक्तलोचनद्वन्द्वाग्नि सृता रक्तस्फुलिङ्गा ।

प्रतारितनार्या क्षुब्धवचास्याकर्ण्य कृशाश्वः सहसा स्तब्धोऽभूत्। स्वमौनसङ्केतैरेव तेन स्फोटिता स्वीया हार्दिकी स्वीकृति । अनेन दृश्येन निश्चलिताहमभूवम्। परित्यक्तो मया एष आश्रमः। स्वतातपावना तपोवनागमनमन्तरा नावशिष्ट कश्चिदन्योपाय । स्वीकृत सबलपुरुषसमक्ष स्वपराजयोऽनलया!

अत्रेराश्रमेऽद्य प्रभात वेला नयनाभिरामा न प्रतीयतेस्म। अभूदागमनमुपस प्राच्याम्। प्रसारितस्त्वया सर्वत्र प्रवञ्चितललनारोषपूर्णनेत्रकान्तिरिव स्वरश्मिजालः। न दूरंगता तथाप्याश्रमस्य मलिनता। निर्वासितामपालामवलोक्य मे पित्रोर्विषमाकुलहृदयस्य कारुण्यभावेनाश्रमस्थेषु सर्वेषु जडचेतनपदार्थेषु विराजतेस्म विचित्रमौदासीन्यम्। नयनगोचरीभूता रश्मयो भगवतो दिवाकरस्य, किन्तु मानसेनाऽऽलस्येन सह न किञ्चिदपि स्खलितं कायिकमालस्यम्।

किन्त्वासीन्मदीयं विचित्रं वृत्तम्। नासीन्मयि विशादस्य छाया, न वाऽलसताया लेखा। पादमर्दिता प्रदर्शितफणा सर्पिणीव परित्यागक्षोभेन नार्याः सत्यं स्वरूपं दर्शयितुमुद्यताऽभवम्। त्वग्दोषं

निवारयितुं भौतिकमुपायमकिञ्चित्करं मत्वा मयाऽऽधिभौतिकोपायस्योपगित्वपरीक्षणं निर्णीतम्।

कायिक-मानसिकदौर्बल्यानां दूरीकरणस्य, कलुषितप्रवृत्तीनां भस्मीकरणस्य च प्रकृष्टं साधनं वरीवर्तते तपः। तपोऽग्ने पुरस्तात् सर्वे क्षुद्रामानवभावाः क्षणमेव भस्मीभवन्ति। तप्तकार्तस्वर इव तपोऽनलतप्तं मानवहृदयं नैर्मल्यमुपैति। द्विगुणितचाकचिक्येन चमत्कृतं च भवति। आश्रितो मयाऽपि स एवोपायः, वृत्रहन्तुर्मघवतोऽर्चनायामेव मया स्वकालयापनमारब्धम्। प्रभाते सत्येव समित्समिद्धाग्निकुण्डे होमकर्मपरा, मघवत्पूजनपरा चाभवम्। कुशासनाधिष्ठितया मयाभिनन्दनमुषसो हिरण्मयैः रश्मिभिः सम्पादितम्। प्राभातिको मन्दसमीरणो मे गात्रे संचारयति स्म नूतनमुत्साहं नवीनां च शक्तिम्। मध्याह्नस्य प्रचण्ड उष्णांशुर्मम पञ्चाग्निसाधने पञ्चाग्नेः कृत्यमकरोत्। सान्ध्यमारुण्यं ममोन्नतललाटफलके सलावण्यं ललितकेलीन् विस्तारयामास। निशातिमिरान्धता चिरं निमज्जयतिस्म मां कार्ष्ण्यतरङ्गितसागरे।

अन्ततः प्राचीललाटे तिलकायमानस्य सुधांशो रश्मयो मे वपुषि सुधासेचनमकार्षुः।

प्रचलति स्म दिनान्ते निशा, निशान्ते च दिनं पश्यतो मे, अनेकानि वर्षाण्यागतानि गतानि च, किन्त्वद्यावधि भगवद्वज्रपाणेर्दर्शनाभिलाषा मम हृदयान्नैव दूरंगता।

सोमरसस्य दानमिन्द्रप्रसादस्य सर्वोत्तमं साधनमिति मया ज्ञातमासीत्।

गोदुग्धमिश्रितस्य सोमरसस्य चषकपानेन यथा मघवतो मनो मोदते न तथाऽन्येन वस्तुना केनापि।

आशुगामिनोऽश्वाः, तीव्रगतयो वायव इव सोमरसा इन्द्रहृदयमुत्क्षिपन्ति। सोमपानोन्मत्तो वज्रपाणिः प्रबलतमानसुरान् विनाश्य स्वभक्तानां कल्याणं साधयति। किन्तु क्व प्राप्तिः सोमस्य? मुञ्जवति गिरावुत्पद्यमाना सोपधिरितो दुर्लभैव बभूव। इत एव क्वापि कदाचित् सोमः प्राप्तो भवेदिति विचार्य सायं स्वघटमुत्थाप्य जलमानेतुं सरः प्रति प्रस्थिता, जलमादाय यावदेव प्रत्यावृत्ता, मार्गे समुत्पन्नो लताविशेषोऽवलोकितो मया। उपरि नभोमण्डले स्वपोड़श-

कलाभिर्भगवान् सोमः प्रकाशमान आसीत्। सोमस्य प्रकाशे सोमलताया अभिज्ञाने नाभून्मे विलम्बः। क्षिप्रमुन्मूलिता मया सा लता। तस्याश्च माधुर्यमास्वादयितुं स्वदन्तैस्तच्चर्वणा प्रारब्धा।

दन्तघर्षणघोषमाकर्ण्येन्द्रः स्वयमेवोपस्थित।

अभिषवकार्ये प्रयुक्तशिलाशकलानामय शब्द इति तेनावगतम्। पश्यन्त्यैव मयाऽभिज्ञात स्वर्गस्य देवः। पृष्टाऽहमिन्द्रेण त्वया तु सोमरसस्य दानं प्रतिज्ञातम्?

'आम्, किन्तु माधुर्यमपरीक्ष्य सोमपान कथं सम्पद्येत?

अतः स्वयमेवास्वाद्यते सोमः'।

'तथाऽस्तु'—मघवा प्रस्थातुमुद्यतः

'भगवन्! भक्तैराहूतो भवान् स्वयमेव तानुपगच्छति। आगम्यतामत्रैव मया सत्क्रियते भवान्'। स्वदन्तघर्षितान् सोमबिन्दूनभिलक्ष्य ते मयोक्ताः—'भवन्तः प्रवहन्तु शनैः शनैर्येन भगवतो मघवतः सोमपाने न कथमपि कष्ट भवेत्'।

पीतो मघवता सोमरसः। गृहीत, प्रसादः भगवता। उत्फुल्लिता भक्तस्य कामनालता।

'वरं ब्रूहि'—भगवतः प्रसादो वैखर्या मुखरित।

'मम वृद्धपितु खल्वाटे शिरसि पुनरपि जायन्ता केशाः'।

'तथाऽस्तु।'

'अपरो वरः'?

'मम तातपादस्यानुर्वरा धरा उर्वरा भवेत्'।

'एवमस्तु। तृतीयो वरः'?

'देवाधिदेव! यदीयाम् प्रसादो भवतस्तदाऽस्याः सेविकापदं भजन्त्या अपालायास्त्वग्दोष आमूल विनष्टो भवेत्'।

'शोभनम्। ममोपासिकाया मनोरथतरुरवश्य पुष्प फलान्वितो भविष्यति' इत्युक्त्वा मां हस्ताभ्या परिगृह्य मन्छरीर वारत्रय रथयुगच्छिद्रान्निष्कास्य बहिः कृतवान्। मम प्रथमेन चर्मणा शल्यको द्वितीयेन गोधा तृतीयेन च कृकलासेऽजायत्। इत्थ हि मे वपुषस्त्रीण्यावरणानि निराकृतानि। त्वग्दोष, समूलं विनष्टः। मघवतोऽनुकम्पया मम कायो दिनकर इव सप्रभो जातः। मयि दृष्टिपातं कुर्वता जनाना नेत्राणि चमत्कृतानि। यो मामपश्यद् स एव विस्मयाकुलोऽभवत्। सकलयोषिवत्तपोबल विलोक्य हठादेव स्तम्भितः ससारः।

आसीदद्य मे नवजीवनस्य मंगलमयी प्रभातवेला। उषसो हरिद्राभैरंशुभिराश्रमस्य प्राङ्गणे पीतमास्तरणं प्रसारितम्। प्रियतमो मे कृशाश्वो मत्काञ्चनकायं समवलोक्य किञ्चिद् हतप्रतिभ इव सञ्जातः। मदीयवपुषीत्थं परिवर्तनं संघटिष्यतीति स्वप्नेऽपि तस्य नासीद् विश्वासः। श्रियाः शक्तिमवलोक्य तस्य हृदयमानन्दातिरेकेण विह्वलमभूत्। ममाश्लेषकाले तस्य नेत्राभ्यान्निपतिता वर्तुलाकारा अश्रुकणा मे कपोलयोः। तस्य हृदयं करुणापूर्णमनुभूयाऽहं चमत्कृताऽभवम्। स्वनारीजीवनं धन्यं मन्यमानाया मे वपुर्हर्षेण रोमाञ्चितं बभूव[1]।



1. अपालात्रेय्या सम्बद्धेयं कथा ऋग्वेदे, बृहद्देवतायाम्, सर्वानुक्रमण्याम्, सायणभाष्ये, नीतिमञ्जर्यां च सङ्केतिता। अत्र तु नवीनपद्धत्या लेखकेन समुपस्थापिता।
—सम्पादकः

# मूको बधिरश्च

डॉ॰ भक्तिसुधा मुखोपाध्याया

( काशीहिन्दूविश्वविद्यालयीये महिलामहाविद्यालये संस्कृतप्राध्यापिका )

मित्रवरेण अजयकुमारेण वारम्वारमनुरुद्धोऽनिलकुमारः लक्ष्मणावती ( लखनऊ ) नगर्यां तस्य मित्रस्य निवासे पूजावकाशमतिवाहयितुं सङ्कल्पितवान्। षड्वर्षपूर्वसङ्घटिताऽजयकुमारस्य विवाहादारभ्य अद्यावधि तस्य पत्न्या अनिलस्य परिचयो न सञ्जातः। तया बहुशः समाहूतोऽपि अनिलो लक्ष्मणावतीगमनाय समर्थो न बभूव। 'अधुना अवश्यमेव तत्प्रार्थना स्वीकर्त्तव्ये'ति निश्चित्य अनिलकुमारः पाटलिपुत्रनगराद् लक्ष्मणावतीं यातुं सङ्कल्पितवान्।

पूजावकाशः प्रारब्धः। अनिलः कदा प्रस्थास्यति, केन शकटेन यास्यतीति चिन्तया यावद् व्यापृत आसीत् तावन्मैत्रोपाह्वस्य मित्रवरस्य निर्मलकुमारस्य अमेरिकामहादेशाच्चिकित्साशास्त्रमधीत्य स्वदेशे प्रत्यावर्तनवार्तां विज्ञाय स तस्य साक्षात्काराय गतः।

सुहृदौ परस्परं मिलित्वा हर्षप्रकर्षं प्रापतुः। ततस्तयोरमेरिकाया जीवनयात्रामधिकृत्य नाना आलापाः प्रावर्तन्त। निर्मलचन्द्रेणोक्तम् अमेरिकावासिनः सदैव समयस्य सदुपयोगं कुर्वन्ति, वृथा कालक्षेपं परिहरन्ति च। एतदनुविद्धाः कथाः कुर्वता निर्मलचन्द्रेण स्वदेशवासिनां स्वभावो वर्णितः। ते यदा वाष्पीयशकटेन भ्रमन्ति तदा कुतूहलात् सहयात्रिणं "महाशयस्य कुत्र वसतिः? गन्तव्यदेशश्च कः? का पुनर्जीविका?" इत्यादि पृच्छन्ति। यदि पृष्टो जन आलापनिपुणो भवेत्तर्हि प्रसङ्गान्तराण्यवतार्यन्ते जल्प्यते च राजनीतिसमाजनीत्यादिकमधिकृत्य।

एवंविधानां जनानाममेरिकायामपि अभावो नास्ति। किन्तु तेषां वृथाजल्पनस्य परिहाराय तत्र कश्चिदुपाय अवलम्ब्यते। यात्रिणः स्वगृहेभ्यः प्रस्थानकाले 'मूको बधिरश्च' इति एकस्मिन् पत्रे लिखित्वा तत् स्वसकाशे रक्षन्ति, केनापि सहयात्रिणा आलापचेष्टायां कृतायां तदेव प्रदर्श्यते, सलापाभिलाषी जनोऽपि तद्दृष्ट्वा आलापाद्विरमति। ततः

पत्राधिकारी यात्री यथेष्ट ग्रन्थादिक पठति, दृश्यावलीना दर्शने आत्मानं व्यापारयति वा।

एतत् सर्वं श्रुत्वा प्ररूढहर्षोऽनिलोऽपि स्वभ्रमणकाले इममुपायमवलम्बयितुं निश्चिकाय। 'पञ्जाबमेल' नाम्नाशकटेन स प्रत्यूषस्येव प्रस्थितः, स्थानं च लब्धं तेन कस्यामपि द्वितीयश्रेणिकक्षायाम्। तत्र कमपि सहयात्रिणमदृष्ट्वा पत्रस्य तस्य उपयोगाभावाशङ्कया किंचिद्विरसीभूतमनिलस्य हृदयम्।

यदा वाष्पीययान वाराणसीविरामस्थानात् प्रस्थातुमुद्यतं तदैव एका महिला ससम्भ्रमं त्वरितगत्या आगत्य तस्यामेव कक्षायां प्रविवेश। यः कोऽपि तामाप्रष्टुं शक्तपर्यन्तमागतः स तत्कक्षायां प्रवेशावकाश न प्राप्तवान्। प्रागेव घण्टीध्वनिसङ्केतप्राप्त यान सपद्येव चलितुमारेभे महिलापि कियत्कालं बहिः दृष्टिं प्रसार्य आसनोपरि उपविष्टा तूष्णीमासीत्।

ततस्तया मुखं परावृत्य पृष्टम्-"महाशय, कुत्र गम्यते भवता ?" अनिलेन किमप्युत्तरमदत्वा तदेव पत्र तस्या रमण्याः समक्ष प्रसारितम्। तद्दृष्ट्वा दूयमानहृदयया 'अहो' इत्युक्त्वा तूष्णीमवस्थितम्।

तच्छ्रुत्वा अनिलस्य हृदयं विवेककशाघातेन भृश क्लिष्टम्। अनुतप्तेन चिन्तितम्, 'हा धिक्, मया असत्यव्यवहारेण रमणी प्रतारिता !" तस्य क्षमायाचनाय आग्रहो बभूव किन्तु-लज्जाजडीकृतात्मना तेन तदपि न शक्यमभवत्।

यदा वाष्पीययान वाराणसेयवाष्पशकटस्थानमुपनीतं तदा पूर्वोक्ता नारी साग्रह कमपि मृगयितुमारभत। अनिलकुमारस्तदा वेदिकां पृष्ठतः कृत्वैव उपविष्ट आसीत्। अतः अन्वेष्टव्य वस्तु किमिति तेन नावगतम्। पश्चात् कक्षायां प्रविष्टा कापि सुवेशा तरुणी तेन अदृश्यत।

कक्षस्था ललना हर्षविकसितनयना नवागतामवादीत् "आगतासि, आ, समाश्वस्तास्मि। तव विलम्ब दृष्ट्वा मया चिन्तितं त्वं नागमिष्यसि।"

नवागतया किशोर्या उदीरित "कथ नागमिष्यामि भ्रातृजाये, यदि त्वया सह न यामि तर्हि अग्रजसमीपगमन अशक्यमेव मया भविष्यति, यतोऽग्रजेन एकाकिन्या मे गमनं नानुमोदितम्।

तरुण्या एतत् सर्वं निम्नस्वरेणैव उक्तम्। अपरया उक्तं "कथमेव

निम्नस्वरेण आलपसि ? आवयोः सहयात्री मूको बधिरश्च । तेन किमपि श्रोतुं बोद्धुं वा न पार्यते।"

नवागता तरुणी कियत्कालमनिल निर्वर्ण्य निरीक्षितुमारेभे । ततस्तया भ्रातृजायाया कर्णे किमपि उक्तम्, भ्रातृजाययापि अनिल साभिनिवेशं परिदृष्ट । ततस्ते मिथः सस्मित निम्नस्वरेण किमपि जल्पितुमारेभाते । अनिल एतत् सर्वमनुभूय, लज्जया स्वेदक्लिन्न-शरीरश्च सजातः। न शशाक शिरोधरामुन्नमय्य ते प्रति दृष्टिपात कर्तुम्, गत्यन्तराभावात् स्य कथमपि तत्र स्थित ।

ते अपि महिले परस्पर प्रति सकौतुक दृष्टिपात कृत्वा निम्नरूपेण सवाद कर्तुमारेभाते ।

पूर्वागता नार्युवाच "तव भ्राता तस्य कमपि सुहृत् पूजावकाशया-पनाय स्वगृहमाहूतवान् ।"

तरुण्या उक्त "अस्त्येतत् ? भ्रातुः बहूनि मित्राणि जानाम्येव । क स. ?"

'स तव भ्रातुरेक पुरातनमित्रम् । श्रुत मया स पाटलिपुत्रनिवासी । किन्तु पठनदशायां तव भ्रात्रा सह कलिकातायामेव अध्यैत । श्रूयते तत्काले स युष्माक कलिकातास्थे वासभवने बहुश आयातः ।'

"अस्ति तस्य नाम अनिलकुमारः ?"

तरुणामुखात् स्वनाम श्रुत्वा अनिलकुमारश्चकित सवृत्त । लज्जा-भयोद्वेगपरिदुर्मनायितचेतसानिलेन चिन्तितं कथ दुर्दैवहतकेन सुहृत्-पत्नी तद्भगिनी च मम सहयात्रिण्यौ सजाते ? अधुना किं कर्तव्यम् ?

भ्रातृजाययोक्त "आम् । रायोपाह्वोऽनिलकुमार एव सः।"

अनिलो नि सन्देहो बभूव । एषा तरुणी अजयस्य कनीयसी भगिनी सुजाता । एना स बाल्ये परसम्नेहेन अपश्यन् । व्यतीयुस्सप्तवर्षाणि किल तदनन्तरम् । श्रुतश्चेन्नामविष्यदेष वार्तालापोऽस्य विकसितयौवनाया सुजाताया तस्या. बालिकायाः लेशमात्रमपि स अभिज्ञातु नाशक्ष्यत् ।

सुजातयोक्त "अनिलचन्द्रोऽतिमञ्जन' । मयि स अतिमात्रमस्नि-ह्यत्, किं च स उत्तम साहित्यिकोऽपि, तस्य लेखा कथाश्च विद्वत्स-माजेन भृशमादृता ।

भ्रातृजाययोक्त "मयापि अधीता तस्य लेखा, न ते मह्य रोचन्ते । आधुनिकनारीभि परमाभ्युदय प्राप्त' । शिक्षाक्षेत्रे, राजनीतौ, समाज-सस्कारे सर्वेषु क्षेत्रेषु ताभिः प्रकृष्टा योग्यता प्रमाणिता । सर्वैः वा आ-

दरेण दृश्यन्ते। किन्तु स हि नारीः प्रति अत्यन्तम् अश्रद्धालुः, तस्य प्रत्येकस्मिन् निबन्धे ताभ्य उपदेशा दीयन्ते। एवं स उन्नतम्मन्यतादोषाविष्टः प्रतिभाति। मन्ये स अष्टादशशताब्द्या अनुदारभावेन परिपूर्णः।

"युज्यते, एतद्विषये मया प्राक् चिन्ता न कृता, अहं तु मम बाल्यानुभवेनैव तत्सबन्धे यत् किञ्चिदवादिषम्। सत्य स नारीः न श्रद्धाति। अभविष्यत् चेत्ताः प्रति तस्य श्रद्धा सम्मानभावना च स एवं लिखितुं कथमपि अलं नाभविष्यत्। अस्माकं देशस्य वर्तमानावनतेरेसदेव कारणं यत्तत्र नारी तु नाद्रियते। पाश्चात्त्यदेशेषु विपरीतमेव, अत एव तद्देशवासिनामेतावानभ्युदयः।"

"न जाने साक्षात्कारे सति कः पुनर्मम अप्रीतिकरोऽनुभवो भविष्यति। तव भ्राता तमावयोः अनुपस्थितौ आमन्त्रयिष्यच्चेत्तर्हि उत्तमः कल्पोऽभविष्यत्। अहं तथाविधेन अनेन मित्रता कर्तुम् असमर्था। येन केन प्रकारेण एकदिवसः अतिवहयितुं शक्यते, किन्तु स अवकाशस्य मासकालस्य यापनाय एव आगमिष्यति। तद्वचनापाठेन अहमेतावती उद्वेजिता यत् नास्त्यत्र चित्रं यदि मम तेन सह विसंवादः प्रवर्तेत। जानासि एव मे स्पष्टवक्तृत्वम्।"

"भ्रातृजाये, नालोचितं किम् एतत् सम्बन्धे भ्रात्रा त्वया सह ?"

"न किञ्चित्। स्वैरं हि आचरति स सर्वविषयेषु। महति सकटे निक्षिप्तास्मि। तस्य मित्रमिति कृत्वा उदासीनापि स्थातुमसमर्था, यतः गृहिण्याः उत्तरदायित्वम्, अतिथिसम्पर्कितानि कर्तव्यानि मयैव पालयितव्यानि।"

अनिलकुमारः सर्वं श्रुत्वा अधिकाधिको गलदर्घो बभूव। तस्य मनसि मित्रस्यामन्त्रणस्वीकारादनुशोचना, मुधैव वैदेशिकानामनुकरणादसत्याश्रयणेन स्वस्मिन् मूकत्वबधिरत्वारोपणाल्लज्जा, द्वाभ्यां रमणीभ्यां स्वविषयकसंवादश्रवणादवमानना, सर्वा भावना युगपदुदपादिरे। दिष्ट्या एताभ्यां रमणीभ्यां विशेषतः बाल्ये सुपरिचितया सुहृद्भगिन्या स नाभिज्ञातः, अधुनाः 'यः पलायते स जीवती'ति नीतिरेव आश्रितव्या। अनिलेन संकल्पितं "नाहमलमस्मि एतद्व्यतिकरानन्तरं पुनरजयसमक्षे गन्तुम्। आगामिनि विरतिस्थाने एव अवतीर्य कलिकातागामिना शकटेन पुनः पाटलिपुत्रे प्रत्यावर्तिष्ये।" तस्मिन्नेव क्षणे स्मृतिपथमायातं यत्तस्य सर्वाः यात्रासामग्र्यो लक्ष्मणावतीपर्यन्त

लेख्यारूढाः कृता । पुनर्निश्चितं तत्रैव अवतार्य स्वसामग्र्यस्ताभिः सह आगामिनैव शकटेन पाटलिपुत्राभिमुखं गन्तव्यम् ।

वाष्पीयशकटे लक्ष्मणावतीसन्निहिते जाते अनिलः स्नानागारं प्रविष्टः । शनैः शनैः शकटस्य गतिः स्थगिता । शकटस्थेषु सर्वेषु अवतीर्णेषु अनिलः स्नानागारान्निर्गतः । परितः दृष्टिं प्रसार्य स यदा रमणीद्वयमजयकुमारञ्च नापश्यत्तदावतीर्य स्वसामग्रीश्च अवतार्य, ताभिः सह शकटस्थानस्य एकप्रान्ते पाटलिपुत्रगामिशकटप्रतीक्षायामुपविष्टस्तस्थौ ।

किञ्चित्कालपश्चात् अनिलः स्वस्कन्धोपरि कस्यापि हस्तन्यासमनुबभूव । मुखं परावृत्य आगतं पुरुषं दृष्ट्वा अनिलः जड़वच्छून्यदृष्ट्यावलोकयन्नवस्थितः ।

अजय एव तदा तदीयस्कन्धन्यस्तकरो दण्डायमान आसीत् । तेन पृष्टं "अनिल, किमेतत् ? त्वमागतः गृहे तु न गतः । कुत्रासीः शकटस्य विरामस्थानप्रापणसमये ?"

अनिलेन कम्पितस्वरेणोत्तरितं "मया अस्मिन्नेव काले पाटलिपुत्र प्रत्यावर्तितव्यम् ।"

"प्रत्यावर्तितव्यम् ! कथम् ?"

"भल्लकाशे सद्यः तडिद्वार्ता आगता ।"

"तडिद्वार्ता । कस्मात् ? कस्तस्य आशयः ?" किंकर्तव्यविमूढेनानिलेन किमप्युत्तरं स्थिरीकर्तुं नापार्यत । वैलक्ष्यलक्ष्यहृदयेन तेन चिन्तितं "धरणि द्विधा भव । अहं त्वद्गर्भे स्वमन्तर्दधामि ।" किन्तु निरनुक्रोशा धरणी यथा पूर्वमवस्थिता !

स्खलितस्वरेणानिलेन कृच्छ्रेणोक्तं, "पितृव्येन तडिद्वार्ता प्रेषिता ? स मृत इति ।"

"किमुच्यते । पितृव्येण स स्वयं मृत इति तडिद्वार्ता प्रेषिता ? दर्शय मे तडिद्वार्ता पत्रम् ।"

अनिलोऽधिकतरो हतबुद्धिवददृश्यत । मुधैव तेन अंगरक्षककोषाणां मध्ये पत्रस्य अन्वेषणं कृतम् । ततस्तेनोक्तं "मन्ये, तडिद्वार्तापत्रं कुत्रापि परिभ्रष्टम् ।"

अजयेन अनिलस्य पृष्ठे हस्तावमर्शं कृत्वा सस्नेहमुक्तं "भ्रातः कथमसंबद्धं जल्पसि ? किं ते वृत्तम् ?"

अनिल आत्मान सयमयितुमसमर्थ आसीत्। अकस्मात्तस्य नयनयोरविरलधारमश्रु प्रावर्तत। ततोऽनिलोऽजयाय सर्वं शकट-वृत्तान्तं कथयामास। सर्वं श्रुत्वा अजयः हसन्नब्रवीत् "एतदेव ते वैलक्ष्योद्वेगकारणम्? शृणु, मम पत्नी त्वा नाजानात्। यद्यपि सा अस्मदीयसामूहिकचित्रान्तर्गत त्वा दृष्टवती तथापि तदाधारादेव साहाय्यान्तर विना अकाण्डे अपरिचितस्य प्रत्यभिज्ञान दुष्करमेव। सुजाता तु यद्यपि प्रथमदर्शनेनैव त्वा नाभिज्ञातवती किन्तु तयोक्तं यदा सा समाहित त्वामपश्यत्तदैव त्वा परिचिकाय। किं चात्मन प्रतीतिं दृढप्रत्ययां कर्तुं तया एक प्रमाणमपि प्राप्तम्। समाहित त्वा पश्यन्त्या तस्या, तया तव हस्तस्थे पत्राधारकोपे त्वन्नामापि लिखितं दृष्टम्। तत ताभ्यां ननान्दृभ्रातृजायाभ्या त्वां किञ्चिदुद्वेजयितु मन्त्रणा कृता। अलीकबधिरस्य मौनपालनयोग्यताया पराकाष्ठायाः दिदृक्षया ताभ्या सकौशलवाग्विन्यासेन सवादं विरचय्य त्वा प्रति किञ्चिदसाधु अपि भाषितम्। अधुना ते बहिः यानमारुह्य तिष्ठतः। ताभ्या सर्वं ज्ञात्वा अह त्वा नेतु पुनरुत्तारायातः। इतस्ततश्च अन्विष्य ततस्त्वां एकस्मिन् प्रान्ते प्राप्तवानस्मि।

अधुना परीक्षाया विजयी असि। विजयिनोऽभ्यर्थितः किमात्मनः गोपयितुमिच्छन्ति अथवा वीरवत् सगौरव पुरस्कारान् गृह्णन्ति? अधुना एहि भ्रातृजायया दत्त प्रमाणपत्र पुरस्कार वा गृहाण। सत्य भणामि भ्रातृजायया ते उक्त 'नून त्वन्मित्रेण स्वभूमिका निपुणम-भिनीता। त्वयि एवविधा योग्यता नास्ती'ति अधुना एहि, सर्वे गृहं यामः।

अनिलेनोक्त "भ्रातः, पश्चात् कदापि आगमिष्यामि। आपृच्छे त्वमधुना, अनुजानीहि मां पाटलिपुत्रे गमनाय।"

अजयेनोक्त 'वृथा मा जल्प। यद् यद् वृत्त तत्प्रति कथमेतावद्-गुरुत्वमारोपयसि? त्वया यदि एतावान् गौरवः स्वाचरितेषु आरो-प्यते तर्हि तव भ्रातृजायया आचरण कथमन्यविध भावयितु शक्यते? तया तव परीक्षणाय—तव तत्कालीनचित्तस्थैर्यं विद्राव्य तव स्वरूप-प्रकाशनार्थं—बहुधा जल्पितम्। देवरभ्रातृजाययोः विनोदालापस्य परिहासतरलतायाश्च अवसरः युवाभ्यां प्रकाम लब्ध उपयोगश्च तस्य कृतः। परिहासजल्पनमिति कृत्वा सा तु न लज्जते कथ त्वमेव परि-दुर्मनायसे? एहि, एहि, कालक्षेप मा कुरु।"

इत्युक्त्वा अजय अनिलं हस्तेनाकर्षयत्तत् सामग्रीश्च उत्थापयितुं वोढु च वाहकमेकमादिदेश।

शुष्कतालुरनिल कथं कथमपि अजयमनुवव्राज। शकटे प्राप्ते स तत्रत्ये महिले ऽभ्यवन्दिष्ट। ते अपि प्रत्यभिवादन चक्रतुः। हास्यतरलस्वरेण सुजातयोक्तं "लक्ष्मणावतीजलवायुप्रभावेण किं भवत वाक्शक्ति श्रवणशक्तिश्च प्रकृतिमापन्ने ?"

क्लिष्टं विहस्य अनिलेनोक्त "शान्त पापम्। परमा शिक्षाय मया लब्धा। आगामिनि काले कदापि वैदेशिकानामन्धानुकरण न करिष्यामि। प्रथमे ग्रास एव मक्षिकापातः संवृत्त। अधुना भ्रातृजाया क्षमा याचे।"

सुजातयोक्तं "महदाश्चर्यकरमेतत् यद्भवता नाहमभिज्ञाता।"

"नैतच्चित्रम्। सप्तवर्षकालिकादर्शनस्य पश्चात्त्वमपि किं मा दर्शनमात्रेणैव अभ्यजानाः। किं च आवयोरन्तिमदर्शनकाले अहं प्राप्तवया आसम्, त्वं तु तत्काले द्वादशवर्षदेशीया कञ्चुकधारिणी क्षुद्रा बालिकैव आसीः। सुजाते। नाभविष्यचेन्मम पत्राधारकोपो दृष्टस्त्वया, समभिज्ञास्यः किं त्व तदापि माम्।"

"हम्, भ्रात्रा सर्वमुक्तमेव। अधुना क्षन्तव्य मे वाक्चापल्यम्। प्रविशतु शकटं भवान्। भ्रातृजाये, युवयोः परिचयः प्रागेव संवृत्तोऽत नास्ति प्रयोजनीयता पुनः परिचयोत्पादनस्य।"

अजयपत्न्या उक्तं "रायमहाशय, भवतोऽभिनयनैपुण्येन सातिशय सन्तुष्टास्मि। भवतः स्वरूप यावदवगतं तावद् भवतोऽलीकमूकत्वबधिरत्वयोः दूरीकरणाय प्रकाम चेष्टितमावाभ्याम्। भवतश्चित्तस्थैर्यस्य संकल्पस्य च भगाय आयोजितः निपुणमुद्वेगकरोऽप्रियश्च संवाद आवाभ्याम्। किन्तु तव असामान्या योग्यता, अपूर्वश्च आत्मसंयम।"

अनिलेनोक्तम् "मा मैवम्। मयासत्यमाचरितमिति भवतीमपराधस्य क्षमा याचे।

"आवामपि क्षमां याचावहे भवन्तम्।"

अजयेनोक्त "किं पुनः 'अपराधः' 'असत्य' 'क्षमा' इत्येतान् जल्पथ ? न जानासि किं मित्रगोष्ठीमध्ये स्त्रीणा समाजे नर्मेषु मृषाभाषण शास्त्रानुमोदितमेव ? यथा

'न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् न विवाहकाले।'

अजयपत्न्या सहर्षमुक्त "बाढम्। क्षम्यते एषोऽपराधः सुष्ठुरूपेण यदि विवाहावसर उपस्थाप्यते। श्रूयता रायमहाशयेन अपराधस्य कृते

क्षमा याचिता, मया दत्तापि। किन्तु तथापि मानवस्य अन्यहृदयभावसंवेदनायोग्यतायाः हेतो यदि विश्वासः न क्रियते। अतः मौखिकवाक्यातिरिक्तं अन्यं किमपि प्रमाणस्वरूपं ददामि—

रायमहाशय, भवतः अभिनयनैपुण्येन प्रीताहं भवते प्रमाणपत्रं दातुकामा आसम्। किन्तु अधुना परिवर्तितो मे सिद्धान्तः। अहं भवते पुरस्कारं दास्यामि। न हि मे ननन्दा भवतोऽयोग्यः पुरस्कारो भविष्यति। यतस्या रूपगुणाभ्यां भवतः पूर्वमेव परिचय आसीत्। अधुनाऽनया काशीहिन्दूविश्वविद्यालयतो बी० ए० तृतीयभागपरीक्षा उत्तीर्णा, प्रथमश्रेणिरपि प्राप्ता। इयं तत्रस्थछात्रावासे स्थित्वा दर्शनविभागे 'एम० ए०' अध्ययनं करोति। यदि ग्रहीतुं नास्ति आपत्तिर्बाधा वा तर्हि अनुरुन्धेऽहं दातारमार्यपुत्रं भगिनीसम्प्रदानाय।"

अनिलेनोक्तं "यदि ममाचरणं भवत्यौ नावाधत, किं पुनर्मां बाधिष्यसे? अहं त्वेतन्मम सौभाग्यसूर्योदयं मन्ये।"

अजयेनोक्तं "साधु भद्रे, साधु, निपुणासि। भगिनी ममैव, सा विवाहयोग्यापि सञ्जाता। मित्रमपि ममैव, चिराय तस्य रूपगुणशीलकुलैरहं परिचितः तथापि यद्धि मया कदापि चिन्तितमपि न, तत्त्वया अनायासेनैव आयोजितं निष्पन्नप्रायमेवेति त्वामहमभिनन्दे। चिराचरितरीत्या कन्यासम्प्रदानार्थं भृशं हि प्रयत्नः क्रियतेऽस्माकं देशे। वरस्य वरपक्षीयाणाञ्च छन्दोऽनुवर्तनार्थम् अर्थस्य सामर्थ्यस्य च यथेष्टं व्ययः क्रियते, किन्तु त्वया सर्वं सुखं सम्पादितम्। धन्यवादास्तुभ्यम्।"

अजयपत्नी "रायमहाशयेन, भवतो धन्यवादो न प्राप्तव्यः किम्? अथवा धन्यवादेन किम्? याचे, मौनं परित्यज्य मुखरयतु आत्मानं स्वच्छन्दरूपेण। असत्यमुक्तमिति कृत्वा चिन्ता न कार्या। श्रुतमपि भवन्मित्रेण यदुक्तम्—

'न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन् न विवाहकाले।'

भेदस्तु एष एव यत् त्वया 'स्त्रीषु' इति उक्ते एकायामेव स्त्रियाम्, 'विवाहकाले' इति उक्ते विवाहप्रस्तावादपि पूर्वमसत्यमुक्तम्। नास्ति तस्माद्विशेषो यतो वयं प्राचीनवैयाकरणजना इव वचनकालादिषु न तावतीं महत्तां दद्मः।

अनिलेनाहीनाः सर्वे उच्चैः जहसुः, शकटश्च गृहप्रान्ते उपनीतः।

●

# शिक्षिताया अनुरोधः

डा० गजाननशास्त्री मुसलगाँवकर, एम० ए०, पी० एच० डी० मीमांसा-
वेदान्तसाहित्याचार्यः

( काशीहिन्दूविश्वविद्यालयीये, संस्कृतमहाविद्यालये प्राध्यापकः, वाराणसी )

कस्मिंश्चित् स्थाने सोमो नाम कश्चित् दरिद्रः—साधुतमो विप्रः निवसतिस्म। स तु यथाकालं विद्यामभ्यस्य साधुशीलां समानगुणरूपां विदुषीं च परिणीय अर्थकार्श्यवशात् कष्टेनैव दिनानि अत्यवाहयत्। अहो दुर्भाग्यता, पण्डितस्यापि तस्य भिक्षां विना दिनमेकमपि न सुखेन निष्पेदे।

अथैकदा रोहिणी सायन्तनात् प्राक् भिक्षार्जिततण्डुलान् पक्त्वा भर्त्रे भोजनाय ददौ। सोमो हि असम्पूर्णेऽपि उदरे स्वयम् अभुक्तः अर्धं पत्न्यर्थं रक्षितवान्।

पत्नी च अकृताहारा निर्गलदश्रुलोचना असम्यग्भोजिनि भर्तरि दीर्घमुष्णं च निःश्वस्य सनिर्वेदं प्राह—नाथ! किम् आवयोः कालः इत्थमेव अतिपतिष्यति। ईदृशी एव किम् आवयोः अदृष्टलिपिः यत् पण्डितमपि भवन्तं दैन्यं न जहाति।

अहो, सम्प्रति यस्य राज्ञोऽधिकारे निवसावः, तेन सुदूरदेशादागताः कतमा वा पण्डिता न प्रतिपाल्यन्ते, केवलं भवन्तमेकं पोषयितुं स किं रिक्तशक्तिः। किम् आक्षिपामि विना अदृष्टम्। पण्डितेन राजभवनं गन्तव्यम्। सभायामुपवेष्टव्यम्। शास्त्रार्थः कर्तव्यः। राजा स्तोतव्यः। तदीयं मनस्तोषयितव्यम्। तस्मात् धनमर्जितव्यम्। विना नृपानुगत्यं विदुषां नान्या गतिः, न च समुन्नतिः, नैवाऽवृतिः इति मया मुहुः प्रतिबोधितोऽपि राजदर्शने विमनायितोऽसि, तन्नूनम् आवां न परित्यक्ष्यति दौर्गत्यम्।

एवं विलपन्ती रोहिणीं सोमोऽवादीत्। प्रिये! अहं घनिष्ठं भीमं नरकम् अन्यादृशं मन्ये। स केवलं प्रतारणायाः मिथ्याप्रतिज्ञायाः, कपटताया अपमानस्य च निवासभूमिः। तत्र सम्मानलाभे राजप्रसादा-

वाग्मी च प्रभूता प्रत्यूहा विराजन्ते। तस्मात् क्लेशकरात् भिक्षा श्रेयसीत्यहं मन्ये।

ततोऽपि रोहिणी पुनराह—नाथ! भद्रम्। शठतादिदोषाणां संबन्धेऽपि त्वया न गन्तव्यम्। किन्तु भगवन्तं सहायकं मत्वा तत्र गन्तव्यम्। गत्वा च राजसदनं किञ्चिदन्यदनालप्य केवलं मयोदीरिता "धर्मस्य सूक्ष्मा गतिः" इति समस्या प्रष्टव्या। तेन हि धनलाभभाग्यमेकदा परीक्ष्यताम्।

ततो सोमः रोहिण्या निर्बन्धातिशयेन अन्तर्निर्विण्णः पुनराह—प्रिये! सत्यं ब्रवीमि, शाठ्यादिदोषमकुर्वाणं मां स न सभाजयिष्यति, तथापि अहं त्वन्निर्बन्धात् यास्यामि।

अथ प्रभातायां रजन्यां स्नातः सर्वाङ्गार्चिततिलकः कृतनित्यक्रियः स्वेष्टदेवतां स्मरन् सोमः राजदर्शनाय प्रतस्थे।

यथासमयं तत्र गत्वा राजद्वारि अनेकान् वीक्ष्य सञ्जातवेपथुः राजभवनं प्राविशत्। प्रविश्य च अन्यैः ब्राह्मणैः सह राजदर्शनं कृतवान्। तत्र अन्ये ब्राह्मणा राज्ञे यथा आशिषं विदधतिस्म, तदनुकृत्य सोमेनापि महाराज! जयाऽस्तु इत्याशीर्विधाय "धर्मस्य सूक्ष्मा गतिः" इति समस्या प्रस्तुता।

अथैतं कृतसमस्यं सोमं विलोक्य राजा अपरान् पण्डितानुवाच—भोः पण्डिताः! झटिति समस्येयं—पूरयितव्या भवद्भिः। भूपतेरेतद्वचनमाकर्ण्य कश्चित् पण्डितस्तां समस्यामपूरयत्। तथाहि—

> यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
> सक्तुप्रस्थविसर्जनात् स च मुनिः स्वर्गं समारूढवान्।
> आचारात्पदमत्ती सुरपुरी कुन्तीत्वथासीत्पृथा
> हा सीता परिशुद्धता जगदधो "धर्मस्य सूक्ष्मा गतिः"॥

इति पूर्णसमस्यं श्लोकमाकर्ण्य प्रसन्नचेताः राजा तं श्लोकं पुनः पुनरावृत्त्य तुतोष। सार्धं च सोमेन शास्त्रीयमन्यच्च संलप्य प्रीतिमनुभूय च सबहुमानं धनं दत्वा प्रत्यहमागन्तुं प्रार्थयामास।

सोमोऽपि बाढमित्युक्त्वा निष्क्रान्तः स्वगृहमागत्य सर्वं रोहिण्यै श्रावयन् तद्धस्ते धनमर्पयामास। रोहिणी तु स्मेरानना प्रमुदितान्तःकरणा सती अहो खण्डिता आवयोर्दुर्गतिरिति चिन्तयन्ती सुखमुवास।

ततस्तथैव सोमः प्रत्यहं राजभवनं गच्छति, शुभाशिषं करोति, पृच्छति च महाराज! धर्मस्य सूक्ष्मागतिरिति। ततो राज्ञः सकाशात् धनं प्राप्नोति प्राप्तं च धनं रोहिण्यै समर्पयन् सुखेन समयं नयति।

अहो परश्रीकातराणां क्रूराणां साहजिकी प्रवृत्तिः यत् राज्ञः सकाशात् संमानं लभमानं तं सोममसहमाना अन्ये तं द्वेष्टुमारभन्तेस्म। असूयकाश्च सर्वे विचारमग्ना अभवन् यत् अहो कथमिव झटिति आगतेन अनेन मन्त्रशक्त्यैव राजा वशीकृतः। यदि एवमेवायं कियन्तिचिन् दिनानि अत्र स्थास्यति चेदस्मान् समूलघातं हनिष्यति। अहो रक्तमिव जलौका धनानि शोषयति। किमधिकं नृपसन्निहितं प्रधानमासनमपि अधिकरोति। एवं मनसि जातमन्यूनां राजसभासदां सोमस्योपरि ईर्ष्याहुतिर्वैरीवर्धते।

सोमस्तु तथैवागत्य प्रत्यहं महाराज! धर्मस्य सूक्ष्मागतिरिति स्मरयति, शास्त्रं चालयति। तेन हि सञ्जातहर्षो राजा कथयति—पण्डितवर! भवादृशानामत्र का दैनिकीवृत्तिर्लभ्यते, परन्तु यदि कुतश्चिद्गुणात् कतिमेकमपि भवता नागम्यते तर्हि तदैव वृत्तिः प्रतिबध्यत इति। सोमस्तु तथास्तु इत्युक्त्वा रूप्यकत्रयं गृहीत्वा प्रतिगच्छति।

सोमेन सार्धं राजानं विघटयितुं कदाचित् सभासदो मन्त्रयन्ति स्म। एकदा पर्यायातो राजनापितः तानवलोक्य अवदत्—महाशयाः! किं परामृश्यते। तैरुक्तम्—नापितस्य नात्राधिकार इति। पुनरपि नापितस्तानवदत्—महाशयाः! नापितः अनीचो नीचो वा—तथापि भवत्सेवासु एवं संलग्न आस्ते। नीच एव नीच कर्मापि सम्पादयितुं जानाति। ततस्ते सनिर्वेदं कथयामासुः, हे दिवाकीर्ते! श्रूयतां नो दुःखसमाचारः। अस्य राज्ञः—सदसि सम्मानितानामस्माकं बहुतिथः कालो गतः। किन्तु इदानीं कुतश्चिदागतो धूर्ततमः अस्मानतिक्रम्य, अवमत्य, 'जित्वा च सकलान् देवान् इन्द्रोऽभून्महिषासुरः' इतीव भूपतिमपि आयत्तं कृतवान्। अतः त्वया यदि अस्य राजवृत्तिः खण्डयितुं शक्यते तर्हि त्वमेव प्राप्तजीवनेभ्यः अस्मभ्यो, भूयानाशीर्वादो द्रव्याणि च कियन्तिचिदपि लभ्यन्ताम् इति। एवं पण्डितैर्निवेदितं निशम्य नापितः सहर्षमवदत्—

महाशयाः! 'नराणां नापितो धूर्तः' इति किमु नाकर्णितं पूज्यपादैः? कियद् वा एतत् कर्म, अहो मिथ्यादेवीप्रसादेन किं न

सिध्यति भूतले । अहो कोऽन्योऽस्ति जनः परप्रतारणे मम सदृशः इति करेण वक्षस्ताडयन् अद्यैव सोमस्य राजसम्मानं लघूकरिष्यामि किन्तु श्रीमद्भिर्नहि विस्मर्तव्यं इत्यवदत् ।

अपरेद्युः राज्ञः क्षुरकर्म कुर्वन् नापितः कथमपि उपराजमुखं स्वमुखमानीय समाघ्राय च यच्छ्रुतं न तत्सत्यम् इति मृदु जल्पति । एवं द्वित्राणि दिनानि तथैव नापितस्य यच्छ्रुतं न तत्सत्यम् इति मृदु जल्पितमाकर्ण्य राजा ब्रूते—अरे नापित ! प्रायः किमिति जल्पसि यच्छ्रुतं न तत्सत्यम् इति । अवितथं ब्रूहि, नो चेत् दण्डनीयो मया । राज्ञः ईदृशं सक्रोधवचनं निशम्य कृत्रिमं वेपमानो नापित आह महाराज ! रक्ष वा मे शिरः, नैकं विना द्वितीयं जाने । श्रूयतां तावत्, एकदाऽहं क्षौरकर्मणे पण्डितस्य सोमस्य गृहं गतवान् । तदानीं तेन सह मे देवपादसम्बन्धी बहुतरः सलापो जातः । तत्र उपसंहार-समये सोमेनोक्तम्-राजप्रसादात्स्वर्गीयमेव प्रमोदं प्राप्नोमि, किन्तु परस्परमालापे राज्ञो मुखनिर्गतेन पलाण्डुगन्धेन उत्प्लुत्य उद्गारेण सह जठरान्त्राणि निर्गच्छान्तीवेति महत् कष्टम् । अहो द्विजातीनां अभक्ष्यस्य पलाण्डोर्लशुनस्य वा भक्षणस्य का कथा, तद्घ्राणमपि पापं जनयतीति । तत्सत्यमसत्यं वेति तथा विदधे, ब्रवीमि चेति ।

राजा तु नापितवचनं निशम्य 'असत्यं सत्यं वा हरति महिमानं जनरवः' इति, अहो दुष्टाशयं तं कथं प्रतिकरोमि ब्राह्मणमिति क्षणं विभाव्य, नापितं प्राह—अरे नापित ! असत्योऽपि ममायं परीवादः न प्रकाशनीयः । यतः असत्यस्यापि मन्दकर्मणः समुद्घाटनात् अनेके सन्देहमावहेयुः, अतः अद्यावधि स धूर्तो यथा न पुनरत्रागच्छेत् युक्त्या तथा विधास्यामि । नापितोऽपि तदाकर्ण्य निष्क्रम्य च फलितो मे मनोरथः इति तेभ्यः सभासदस्येभ्यः सर्वं न्यवेदयत् ।

निष्क्रान्ते च नापिते निभृतमुपविश्य राजा अचिन्तयत्, कथंकारम् अपुनरागमनाय तं सोमं प्रतिनिवर्तयामि । यद्येकमपि दिनं तस्यागतिः प्रतिबध्येत तर्हि नियमलंघनात् वृत्तिः प्रतिबध्यते । ततः पुनः स नागमिष्यतीति । एवं विचार्य द्वारपालमाह-द्वारपाल ! आगामिदिवसे प्राक्तनेभ्यः सभासद्भ्यो विना अत्रागन्तुं न कस्मैचित् पन्था देयः ।

अथ दैवात् परेद्युः सहकृतज्वरेण शिरःशूलेन पीडितः सोमः अरुणनयनश्चिन्तयामास । अहो यदि कथमपि तत्र गम्येत तर्हि चिराय

वृत्तिर्न लुप्येत। ततो रक्तचन्दनद्रवेण कर्पूरकुङ्कुममिश्रितेन शिरः प्रलिप्य च दीर्घतमोष्णीशस्य द्वित्रिगुणितेन वेष्टनेन उत्तमांगं प्रावृत्य अनभिज्ञात इव राजसभां प्राविशत्। राजा च सोमस्य आगमनसमयः समतीत इति यावच्चिन्तयामास तावत्सोमः जयोऽस्तु महाराज! धर्मस्य सूक्ष्मागतिरित्युच्चारयामास।

राजा च तं वीक्ष्य स्वान्तः क्रोधं प्रच्छाद्य पूर्ववत् संभाष्य रूप्यकत्रयं प्रदाय च सोमं परावर्तयत्। आह च द्वारपालं श्वो यथाकालं सदस्येभ्यो विना न कश्चिदपि अन्यं पुमांसं राजभवने प्रवेशयेति।

अथ परेद्युः सोमस्य द्विगुणतरो ज्वरो जातः। गात्रे असह्यवातस्पर्शः पद्भ्यां गन्तुमसमर्थश्च स सर्वतो वसनपिहितां दोलिकामारुह्य राजसदनं प्राविशत्। दौवारिकास्तु दोलिकया काचित् प्रमदा यातीति मन्यमानास्तं न न्यवारयन्। अथ तस्मिन् दिनेऽपि गतदिवसीययुक्त्या स नाद्य आगन्तु शक्ष्यतीति चिन्तयति राजनि जयोऽस्तु महाराज! धर्मस्य सूक्ष्मागतिरित्युवाच सोमः। अस्मिन्नेव क्षणे तं दृष्ट्वा साश्चर्यो राजा अनिच्छयापि पूर्ववत् आलप्य तमब्रवीत्—पण्डितवर! आगामिनि दिवसे दानपत्रमेतत्प्रदर्श्य कार्यालये स्थिताच्छंखनिधेर्वणिजो रूप्यकत्रयात्मिका वृत्तिर्ग्राह्या। सोमोऽपि तथास्तु इति स्वीकृत्य दानपत्रं ततो निर्गतः।

अथ राजा वणिजं तमाहूय आज्ञापयामास रे शंखनिधे! श्वो मम दानपत्रं गृहीत्वा यः कश्चित् त्वत्तो रूप्यकं ग्रहीतुम् आगमिष्यति, तस्य अवश्यमेव कर्णनासिके छिन्धि। वार्तामिमां च सर्वथा न स्फोरय। यथाज्ञा देवपादस्येत्युक्त्वा वणिक् निष्क्रान्तः।

अथ प्रातः सोमः तद्दानपत्रमादाय कार्यालयं यावत् याति तावत् मध्येमार्गं स नापितो दैवेन उपस्थापितोऽवदत्-पूज्यपाद! अनेकानि दिनानि व्यतीतानि। किञ्चित्पुरस्कारं याचमानं मां, दास्यामि दास्यामीति केवलं वदसि, किन्तु न किमपि प्रयच्छसि।

एवं नापितवचनं श्रुत्वा सोमोऽब्रवीत्-रे नापित! अद्यैव तद् दास्यामि, तदानीमेव तद्दानपत्रं नापितहस्तसात् करोतिस्म, अवोचच्च-रे नापित! कार्यालये गत्वा एतत् प्रदर्श्य शंखनिधेः सकाशात् तिस्रो मुद्रा गृहीत्वा द्वे भवता नेये, अपरा च मह्यं देया नापितोऽपि दानपत्रमादाय दत्वा च वणिक्करे यावन्मुद्रात्रयमयाचत् तावत् बहुविधमाक्रोशमानस्य हा तात! हा मातः! हा महाराज!

यथेदमनुवदति पद्यम्—

चिन्तामणिश्चिन्तितमेव सूते
कल्पद्रुमः कल्पितमेव दत्ते
सा कामधेनुर्द्रवतेऽन्यसगात्
भवान्न चिन्तादिमपेक्षते गुणी

एव परिणतगुरुगुणोदयाः सर्वे स्व स्व स्वाध्यायविधिना समेधमाना गुरायशासि परितो विसारयामासु ।

तत मणिबार गुरुप्रकोष्ठे प्रविश्य—

"गुरव दशवादनवेला प्रसरति । कालेजगमन न त्वरयति भवत, तत्किमिति । इदानीं यावत् किमनुसन्धाय कार्यान्तरे व्यापृणवाने स्थितम्"

गुरु—किस्साकहानीलेखने व्यापृतेन मया समयगवय पुरतो धावन्नपि नावलोचितः ।

मणिः—किं किं, किस्साकहानीलेखने । किं कहानीशब्दः किस्साशब्दश्च सस्कृतौ । इमौ तु हिन्दीभाषायां वर्तेते ।

गुरु.—श्रूयताम्, एकः शब्द. सुप्रयुक्त सम्यग्ज्ञात स्वर्गे लोके कामधुग्भवति इति तत्र भवन्तो महाभाष्यकाराः समामनन्ति । तत्र सम्यग्ज्ञातः इति पद वर्तते । केवलं सर्वैः सर्वे शब्दाः व्यवह्रियन्ते, पर सम्यग्ज्ञान सर्वेषां नास्ति । तादृश ज्ञानं तु कवीनामेव । अतएवेदमुच्यते—

तानेव शब्दान्वयमालपामो
तानेव चार्थान्वयमुल्लिखाम
तैरेव विन्यासविशेषभव्यै
सम्मोहयन्ते कवयो जगन्ति

मणि—केयं प्रकृते विन्यासविशेषभव्यता ?

गुरुः—समनुविन्दस्व स्वान्त नितान्त शान्तम् ।

या दुग्धापि न दुग्धेव
कविदोग्धृभिरन्वहम्
हृदि न सन्निधत्ता सा
सूक्तिधेनु सरस्वती

मणि—ननु 'न दुग्धेव' इत्यस्य कोऽर्थः ?

गुरुः—अत्र इव शब्द ईषदर्थे, तेन कवयो दोहनकर्तारः तैर्दुग्धा निस्सारितक्षीरा, तथापि ईषदपि दुग्धा न, अमृतरहिता नीरसा न, सदा

सरसा अमृतमयी च। अस्तु, प्रकृतमनुसराम-। कहानीतिशब्दः सुसंस्कृतः कथमित्युच्यते।

"कं शिरोऽम्बुनि सुखे च" इति कोशात् सुखवाचकः 'क' शब्दः, "ओहाङ् गतौ" (ये गत्यर्थास्ते ज्ञानार्थाः) इत्यस्मात् ज्ञानार्थात् हा धातोर्निष्ठाक्तप्रत्यये, तस्य नत्वे "कादल्पाख्यायाम्" इति सूत्रेण केन सुखेन हानं ज्ञानं यया इति विग्रहे अल्पाख्यायां ङीप् प्रत्यये 'कहानी' इति प्रयोग निष्पद्यते। या कहानी भवति तत्र अल्पमेवाख्यायते। नेयं ग्रंथरूपा। एवमेव किस्साशब्दश्च।

'कस्' गतौ, इत्यस्मात् भावे क्विपि 'कस्' इति निष्पन्नम्, स प्रत्यये बहुल छन्दसि इत्यादेरित्वे स्त्रियां टापि किस्सा इति रूपं भिस्सा इतिवत् निष्पद्यते। "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। एवं किस्सा कहानी- संवादः-जैनानां जातकम् इति सर्वे पर्यायाः।

मणिः—पूज्यपादाः, आश्चर्यम्, श्रीमद्भिर्नवीनं व्याकरण निर्माणीयम्।

गुरुः—किं भोः, कर्तव्यं बहु, बोद्धव्यं बहु, प्राप्तव्यं बहु, अल्पीयान् कालः। येषां शब्दानां प्रयोगो न भवति तेऽपि तु शब्दास्तावद्प्राप्तैः प्रयुक्ताः। यथा भगवत्पादशंकराचार्यविरचिते महात्रिपुरसुन्दरीस्तवे—

"परमशिवमहेले मज्जनागारमेहि"

अत्र महिलापरपर्यायो महेला शब्दः।

"निधेहि पदपंकजे कनकघुंघुरुमम्बिके"

एष घुंघुरु शब्दोऽपि तत्रैव प्रयुक्तो दृश्यते।

एवं "वस्तुसन्दर्शनादूर्ध्वं लालाच्यावो हि लालचम्" णिजन्तात् ललधातोरचि स्त्रियां टापि "लाला" इति, तत्र लालोपपदात् 'च्यु' धातोः "अन्येभ्योऽपि दृश्यन्ते"इति भावे ड प्रत्यये, टेर्लोपे,प्रत्ययलक्षणमाश्रित्य 'लोपोव्योर्वलि' इति यलोपे प्रातिपदिकत्वात्स्वाद्युत्पत्तौ मोरमि लालच निष्पन्नम्। सर्वमेतत् मन्निर्मित 'भाषासमन्वयकोशे' द्रष्टव्यम्।

मणिः—माननीयाः, मम तु इदमेव ज्ञानं यत् किस्साकहानी पदार्थः लौकिकः न तु शास्त्रीयः, सोऽप्याधुनिको न प्राचीनः। अस्मिन्विषये प्रकाशकिरणानुपक्षिपन्तु।

गुरुः—आम्, अयं विषयोऽतिचिरन्तनः। कश्यपपत्नी दक्षपुत्री मनुरासीत्, तत एव मानवाः संभूताः, यथा दनोर्दानवाः, दितेर्दैत्याः, अदितेरादित्या, नतु मनुमहाराजसन्ततिर्मानवो, तथा सति सर्वं

जगत् क्षत्रियं स्यात्, मनुमहाराजस्य क्षत्रियत्वात्। मनुप्रभृति इयं कहानी लोके प्रवृत्ता, सैव स्वपुत्रेभ्यः दितेः, अदितेः, कद्र्व्याः विनतायाः स्वभागिनीनां वृत्तान्तमचकथत्। अथचेय कहानी ऋग्वेदे संसारादिग्रन्थे अजीगर्तपुत्रस्य शुनःशेपस्य इन्द्रमरुदग स्त्यानाम्, अगस्त्यस्य लोपामुद्रया धर्मपत्न्या, शिष्यैश्च इन्द्रादितिवामदेवानाम्, वसिष्ठतत्पुत्रयोरिन्द्रस्य च, इन्द्रभार्गवनेमानां यमयम्योः अग्निदेवगणानाम्, इन्द्रेन्द्राणिवृषाकपीनाम्, उर्वशीपुरूरवसोश्च संवादरूपा विद्योतते।

तत्परसुपनिषत्सु, महाभारते, पुराणेषु, उपपुराणेषु कहानी इयं विश्वग्दरीदृश्यते, बौद्धानां जैनानां च जातकग्रन्थेषूपलभ्यते। गुणाढ्यस्य बृहत्कथा, क्षेमेन्द्रस्य कथासरित्सागरः, दशकुमारचरितम्, वासवदत्ता, कादम्बरी, भोजप्रबन्धः, पञ्चतन्त्रम्, हितोपदेशः, वेतालपञ्चविंशतिः, उदयनकथा, नलदमयन्ती, उषानिरुद्धम्, दुष्यन्तशकुन्तला, इत्येवं संस्कृतवाङ्मये महाविस्तृतोऽयं कहानीसम्प्रदायः। भाषायामपि विक्रमादित्यस्य सिंहासनबत्तीसी, महाराजभर्तृहरेर्वैराग्यकथा, पृथ्वीराजस्य शृंगारकथा आल्हाऊदलयोर्वीररसमयी कहानी बहुधा प्रसृता। इदानीमपि तोतामैना, उड़नखटोला, अकबरबीरबल, इति प्रसिद्धाः कहान्यो वर्तन्ते।

मणिः—आर्य गुरवः, आसु कहानीषु कस्को मुख्यो विषयः किं च तासु वैलक्षण्यम्?

गुरुः—शृणु तावदवधानेन, साहित्यिक-कलात्मक-वैज्ञानिक-धार्मिक सांस्कृतिकैतिहासिक-राजनीतिक-स्वाभाविक-रुचिमय्यो बहुविधास्ताः आदित आरभ्य इदानीं यावत् परिदृश्यन्ते। तासु च क्वचित् चरित्रस्य वस्तुनः शैलीरूपस्य शीलस्य, कुहचनानुभवस्य अवदानस्य कथंचिदाकस्मिकघटनानां क्वचन वातावरणस्य दैवसंयोगस्य च प्राधान्यम्।

इदं तु वश्येनावश्यमाश्वसनीयं यदासु सर्वासु कहानीषु कल्पनाकौशलं मुख्य तथ्यम्। तत्र निसर्गसर्गवर्गीकृतमेकम्, प्रौढिम्ना समुपेतं द्वितीयम्। मुरारेस्तृतीयः पन्था इव तृतीयं मदीयम्। श्रुतं त्वया—

शास्त्रीयं लौकिकं वेति
प्राचीनं साम्प्रतं तथा
कश्चिदज्ञानक नष्टं
कहानीविषये—तत्—

महामहोपाध्याय

डॉ० श्री गोपीनाथ कविराज की

# दो अमूल्य कृतियाँ

## १. साधुदर्शन और सत्प्रसङ्ग

( दो खण्ड )

स्वनामधन्य श्री कविराज जी का अनेक साधु-संन्त, साधक-सिद्ध महापुरुषों से सुदीर्घ सम्पर्क रहा है। आपने अपनी दैनन्दिनी में उक्त सम्पर्क से महत्त्वपूर्ण पहलुओं को वार्तालाप, घटना-क्रम आदि के संस्मरणों के रूप में लिपिबद्ध किया है। इन्हीं संस्मरणों में से कुछ चुने हुए अंश 'साधुदर्शन ओ सत्प्रसङ्ग' शीर्षक से बंगला में दो जिल्दों में प्रकाशित हो चुके हैं। इनका हिन्दी अनुवाद पहली बार प्रकाशित होने वाला है। विभिन्न-साधना-मार्गों के पथिकों से प्रत्यक्ष सम्पर्क का यह विवरण अत्यन्त रोचक और ज्ञानप्रद है। महा-महोपाध्याय जी जैसे अधिकारी मनीषी की लेखनी से प्रस्तुत होने के कारण इसका मूल्य अद्वितीय है।

## २. श्रीकृष्णप्रसङ्ग

इसका परिचयात्मक विवरण ऊपर लिखे प्रकाशन में दिया जाएगा।

जगत् क्षत्रियं स्यात्, मनुमहाराजस्य क्षत्रियत्वात्। मनुप्रभृति इयं कहानी लोके प्रवृत्ता, सैव स्वपुत्रेभ्यः दितेः, अदितेः, कद्रूव्याः विनतायाः स्वभागिनीनां वृत्तान्तमचकथत्। अथचेयं कहानी ऋग्वेदे संसारादिग्रन्थे अजीगर्तपुत्रस्य शुनःशेपस्य इन्द्रमरुदगस्त्यानाम्, अगस्त्यस्य लोपामुद्रया धर्मपत्न्या, शिष्यैश्च इन्द्रादितिवामदेवानाम्, वसिष्ठतत्पुत्रयोरिन्द्रस्य च, इन्द्रभार्गवनेमाना यमयम्योः अग्निदेवगणानाम्, इन्द्रेन्द्राणिवृपाकपीनाम्, उर्वशीपुरूरवसोश्च संवादरूपा विद्योतते।

तत्परसुपनिषत्सु, महाभारते, पुराणेषु, उपपुराणेषु कहानी इयं विष्वग्दरीदृश्यते, बौद्धानां जैनानां च जातकग्रन्थेपूपलभ्यते। गुणाढ्यस्य बृहत्कथा, क्षेमेन्द्रस्य कथासरित्सागरः, दशकुमारचरितम्, वासवदत्ता, कादम्बरी, भोजप्रबन्धः, पञ्चतन्त्रम्, हितोपदेशः, वेतालपञ्चविंशतिः, उदयनकथा, नलदमयन्ती, उपानिरुद्धम्, दुष्यन्तशकुन्तला, इत्येवं संस्कृतवाङ्मये महाविस्तृतोऽयं कहानीसम्प्रदायः। भाषायामपि विक्रमादित्यस्य सिंहासनबत्तीसी, महाराजभर्तृहरेर्वैराग्यकथा, पृथ्वीराजस्य शृंगारकथा आल्हाऊदलयोर्वीररसमयी कहानी बहुधा प्रसृता। इदानीमपि तोतामैना, उड़नखटोला, अकबरबीरबल, इति प्रसिद्धाः कहान्यो वर्तन्ते।

मणिः—आर्य गुरुवः, आसु कहानीषु कस्को मुख्यो विषयः किं च तासु वैलक्षण्यम्?

गुरुः—शृणु तावदवधानेन, साहित्यिक-कलात्मक-वैज्ञानिक-धार्मिक सांस्कृतिकैतिहासिक-राजनीतिक स्वाभाविक-रुचिमय्यो बहुविधास्ता आदित आरभ्य इदानीं यावत् परिदृश्यन्ते। तासु च क्वचित् चरित्रस्य वस्तुन शैलीरूपस्य शीलस्य, कुट्टनानुभवस्य अवदानस्य कथंचिद्, कस्मिकघटनानां क्वचन वातावरणस्य दैवसंयोगस्य च प्राधान्यम्

इदं तु वश्येनावश्यमाश्वसनीयं यदासु सर्वासु कहानीषु कल्पन कौशलं मुख्य तथ्यम्। तत्र निसर्गसर्गवर्गीकृतमेकम्, प्रौढिम्ना समुपे द्वितीयम्। मुरारेस्तृतीय पन्था इव तृतीय मदीयम्। श्रुतं त्वया—

शास्त्रीयं लौकिकं चेति
प्राचीनं साम्प्रतं तथा
कौञ्चिदशानक मद
कहानीविषये—त्त

महामहोपाध्याय

## डॉ० श्री गोपीनाथ कविराज की

## दो अमूल्य कृतियाँ

### १. साधुदर्शन और सत्प्रसङ्ग

( दो खण्ड )

स्वनामधन्य श्री कविराज जी का अनेक साधु-सन्त, साधक-सिद्ध महापुरुषों से सुदीर्घ सम्पर्क रहा है। आपने अपनी दैनन्दिनी में उक्त सम्पर्क से महत्त्वपूर्ण पहलुओं को वार्तालाप, घटना-क्रम आदि के संस्मरणों के रूप में लिपिबद्ध किया है। इन्हीं संस्मरणों में से कुछ चुने हुए अंश 'साधुदर्शन ओ सत्प्रसङ्ग' शीर्षक से बंगला में दो जिल्दों में प्रकाशित हो चुके हैं। इनका हिन्दी अनुवाद पहली बार प्रकाशित होने वाला है। विभिन्न-साधना-मार्गों के पथिकों से प्रत्यक्ष सम्पर्क का यह विवरण अत्यन्त रोचक और ज्ञानप्रद है। महा-महोपाध्याय जी जैसे अधिकारी मनीषी की लेखनी से प्रस्तुत होने के कारण इसका मूल्य अद्वितीय है।

### २. श्रीकृष्णप्रसङ्ग

इसका परिचयात्मक विवरण ऊपर लिखे प्रकाशन में दिया जाएगा।


**भारतीय विद्या प्रकाशन**

पो० बा० २०८, कचौड़ी गली,

वाराणसी-२